M-3000

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श्रीरघुवंशमहाकाव्य द्वितीय सर्ग | – | काव्य | पूर्ण | – | 3/12 | 30 | संस्कृत | कागद | 13 | 52 | | |

पं० गणेशप्रसाद शुक्ल गोलागंज नागपुर स० नं० १२१८



श्रीगणेशायनमः आशास्फुराशीभवदंगवल्लीभासैवदासीकृतदुग्धसिंधुं मंदस्मितैर्निंदितशारदेंदुंवंदे ऽरविंदासनसुंदरीत्वां १ अथेति अथनिशा-
तिक्रमणानंतरं यशोधनः प्रजानामधिपः प्रजेश्वरः प्रभातेप्रातःकाले जाययासुदक्षिणया प्रतिग्राहयित्र्या प्रतिग्राहिते स्वीकारिते गंधमाल्येययाप्रति-
ग्राहिण्याधेन्वा सा जायाप्रतिग्राहितगंधमाल्यातां तथोक्तां पीतंपानमस्यास्तीतिपीतः पीतवानित्यर्थः अर्शआदिभ्योऽजित्यच्प्रत्ययः पीतागावोभु-
क्ताब्राह्मणाइतिश्रीमहाभाष्येदर्शनात् पीतः प्रतिबद्धः वत्सोयस्याः सा तांतथोक्तां ऋषेर्वसिष्ठस्य धेनुं वनाय वनंप्रतिगंतुं मुमोच मुच्लृ मोक्षणेइतिधा-
तोः कर्त्तरिलिट् वनायेतिक्रियार्थोपपदेत्यादिनाचतुर्थी जायापदसामर्थ्यात् सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसंधेयं तथाहिश्रुतिः पतिर्जायां

अथप्रजानामधिपः प्रभातेजायाप्रतिग्राहितगंधमाल्यां वनायपीतप्रतिबद्धवत्सांयशोधनोधेनुमृषेर्मुमोच १ तस्याः
खुरन्यासपवित्रपांसुमपांसुलानाधुरिकीर्तनीया मार्गमनुष्येश्वरधर्मपत्नीश्रुतेरिवार्थंस्मृतिरन्वगच्छत् २

प्रविशतिगर्भोभूत्वासमातरं तस्यांपुनर्नवोभूत्वादशमेमासिजायते तज्जायाजाया भवतियदस्यांजायतेपुनरिति यशोधनइत्यनेनपुत्रवत्कीर्तिलो-
भात् राजानर्हेगोरक्षणेप्रवृत्तइतिगम्यते अस्मिन्सर्गेवृत्तमुपजातिः अनंतरोदीरितलक्ष्मभाजौपादौयदीयावुपजातयस्ताइति १ तस्याइति पांसवो
दोषाः आसांसंतीति पांसुलाः स्वैरिण्यः स्वैरिणीपांसुलाचस्यादित्यमरः सिध्मादिभ्यश्चेतिलच्प्रत्ययः अपांसुलानांपतिव्रतानां धुर्यग्रे कीर्तनीयापु-
रिगणनीयामनुष्येश्वरधर्मपत्नीसुदक्षिणा खुरन्यासैः पवित्राः पांसवोयस्यतं रेणुर्द्वयोः स्त्रियांधूलिः पांसुर्नानद्वयोरजइत्यमरः तस्याः धेनोः मार्गं
स्मृतिर्मन्वादिवाक्यं श्रुतेर्वेदस्यार्थमभिधेयमिवान्वगच्छत् अनुसृतवती यथास्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति तथासापि गोखुरक्षुण्णमेवमा

र्गमनुससारेत्यर्थः धर्मपत्नीत्यत्र अश्वघासादिवत्तादर्थ्येषष्ठीसमासः प्रकृतिविकारभावाभावात् पांसुलपथवृत्तावपिअपांसुलानामितिविरोधा-
लंकारोऽभ्यन्यते २ निवर्त्येति दयालुः कारुणिकः स्याद्दयालुःकारुणिकइत्यमरः स्पृहिगृहीत्यादिनाआलुच्प्रत्ययः यशोभिः सुरभिः मनोज्ञः सुर
भिःस्यान्मनोज्ञेपीतिविश्वः सराजा तांदयितांनिवर्त्य सौरभेयीं कामधेनुसुतांनंदिनीं धरंतीतिधराःपचाद्यच् पयसांधराःपयोधराः स्तनाः स्त्रीस्तना
ब्दौपयोधरावित्यमरः अपयोधराःपयोधराःसंपद्यमानाः पयोधरीभूताःअभूततद्भावेच्विः कुगतिप्रादयइतिसमासः पयोधरीभूताश्चत्वारःसमुद्रा य

निवर्त्यराजादयितांदयालुस्तांसौरभेयींसुरभिर्यशोभिः पयोधरीभूतचतुःसमुद्रांजुगोपगोरूपधरामिवोर्वीं ३
व्रतायतेनानुचरेणधेनोर्न्यषेधिशेषोऽप्यनुयायिवर्गः नचान्यतस्तस्यशरीररक्षास्ववीर्यगुप्ताहिमनोःप्र-
सूतिः ४

स्यास्तां अनेकमन्यपदार्थेइत्यनेकपदग्रहणसामर्थ्यात्त्रिपदो बहुव्रीहिः गोरूपस्यधरामुर्वीमिव जुगोपररक्ष भूरक्षणप्रयत्नेनैवररक्षेतिभावः ३ व्र-
तायेति व्रताय नतुजीवनायेतिभावः धेनोरनुचरेण तेनदिलीपेन शेषोऽवशिष्टोप्यनुयायिवर्गः अनुचरवर्गः न्यषेधि निवर्तितः शेषत्वं सुदक्षिणा
पेक्षया कथंतर्हि आत्मरक्षणमतआह नचेति तस्यदिलीपस्य शरीररक्षाच अन्यतःपुरुषांतरान्न कुतः हियस्मात्कारणात् मनोः प्रसूयत
इतिप्रसूतिःसंततिः स्ववीर्यगुप्ता स्ववीर्येणैवरक्षिता नहिस्वनिर्वाहकस्यपरापेक्षेतिभावः ४ ५ ३ ३ ५ ५ ३

आस्वादवद्भिरिति सम्राट् मंडलेश्वरः येनेष्टंराजसूयेनमंडलस्येश्वरश्चयः शास्तियश्चाज्ञयाराज्ञः ससम्राडथराजकमित्यमरः सराजा आस्वादवद्भिः स्वा
द्यकैः रसवद्भिरित्यर्थः तृणानांकवलैः ग्रासैः कंडूयनैः खर्जनैः दंशानांवनमक्षिकाणां निवारणैः दंशस्तुवनमक्षिकेत्यमरः अव्याहतैरप्रतिहतैः स्वैर
गतैः स्वच्छंदगमनैश्च तस्याः धेन्वाः समाराधनतत्परः शुश्रूषासक्तो ऽभूत् तदेवपरंप्रधानंयस्येतितत्परः तत्परेप्रसितासक्तावित्यमरः ५ स्थितइ
ति भूपतिस्तांनंदिनींस्थितांसतीं स्थितःसन् स्थितिरूर्ध्वावस्थानं प्रयातांप्रस्थितां उच्चलितः प्रस्थितःसन् निषेदुषींनिषण्णामुपविष्टामित्यर्थः भाषा

आस्वादवद्भिः कवलैस्तृणानांकंडूयनैर्दंशनिवारणैश्च अव्याहतस्वैरगतैः सतस्याः सम्राट्समाराधनतत्परोभूत् ५
स्थितःस्थितामुच्चलितःप्रयातांनिषेदुषीमासनबंधधीरः जलाभिलाषीजलमाददानांछायेवतांभूपतिरन्वगच्छत् ६ सन्य
स्तचिह्नामपिराज्यलक्ष्मींतेजोविशेषानुमितांदधानः आसीदनाविष्कृतदानराजिरंतर्मदावस्थइवद्विपेंद्रः ७ लताप्रतानो
द्ग्रथितैःसकेशैरधिज्यधन्वाविचचारदावं रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निवदुष्टसत्वान् ८

यांसद्वसस्रुवइतिक्वसुप्रत्ययः उगितश्चेति ङीप् आसनबंधे उपवेशने धीरः स्थितः उपउष्टःसन् इत्यर्थः जलमाददानांपिबंतीं जलाभिलाषीसन्
पिबन्नित्यर्थः इत्थंछायेवान्वगच्छत् अनुसृतवान् ६ सइति न्यस्तानिपरिहृतानि चिन्हानिछत्रचामरादीनियस्यास्तां तथाभूतामपि तेजोविशेषेणप्रभा
वातिशयेनानुमितां सर्वथाराजाएवायंभवेदित्यूहितां राज्यलक्ष्मींदधानः सराजा अनाविष्कृतदानराजिः बहिरप्रकटीकृतमदरेखः अंतर्गतामदा
वस्थायस्यसतथाभूतोद्विपेंद्रइवासीत् ७ लतेति लतानांवल्लीनां प्रतानैः कुटिलतंतुभिः उन्नमध्यग्रथिताः येकेशास्तैरुपलक्षितः इत्थंभूतलक्षणे २

तृतीया सराजा ज्यामधिरूढमधिज्यमारोपितमौर्वीकंधनुर्यस्यसो ऽधिज्यधन्वासन् धनुषश्चेत्यनङ् देशः मुनिहोमधेनोः रक्षापदेशात् रक्षाव्याजा
त् वन्यान् वनेभवान् दुष्टसत्वान् दुष्टजंतून् द्रव्यासुव्यवसायेषुसत्वमस्त्रीतुजंतुष्वित्यमरः विनेष्यन् शिक्षयिष्यन्निवदावंवनंविचचार वनेच वनवन्हौच
दवोदावइहेष्यनइतियादवः वनेसंचचारेत्यर्थः देशकालाध्वगंत व्याकर्मसंज्ञाह्यकर्मणामितिदावस्य कर्मत्वं ८ विसृष्टेत्यादिभिःषड्भिःश्लोकैः तस्य
महामहितयाद्रुमादयोपिराजोपचारंचक्रुरित्याह विसृष्टेति विसृष्टाः पार्श्वानुचराः पार्श्ववर्तिनोजनाः येन तस्य पाशभृतावरुणेन समस्य तुल्य
स्य अनुभावो ऽनेनसूचितः तस्यराज्ञः पार्श्वयोः द्रुमाः उन्मदानां उत्कटमदानांवयसांखगानां खगबाल्यादिनोर्वयाइत्यमरः विरावैः आली-

विसृष्टपार्श्वानुचरस्यतस्यपार्श्वद्रुमाःपाशभृतासमस्य उदीरयामासुरिवोन्मदानामालोकशब्दंवयसांविरावैः ९
मरुत्प्रयुक्ताश्चमरुत्सखाभंतमर्च्यमारादभिवर्तमानं अवाकिरन्बाललताःप्रसूनैराचारलाजैरिवपौरकन्याः १०

कशब्दं आलोकस्यशब्दंवाचकं आलोकयेतिशब्दमित्यर्थः उदीरयामासुरिव अवदन्निवेत्युत्प्रेक्षा ९ मरुदिति मरुत्प्रयुक्ताः वायुनाप्रेरिताः
बाललताः आरात्समीपे ऽभिवर्तमानं आराद्दूरसमीपयोरित्यमरः मरुतःवायोः सखा मरुत्सखोऽग्निः सइवाभातीतिमरुत्सखाभः आतश्चो
पसर्गेइतिकप्रत्ययः अर्च्यंपूज्यं तंदिलीपं प्रसूनैः पुष्पैः पौरकन्याः पौराणांकन्याः पौर्यश्चताःकन्याश्चेतिवा आचारार्थैः लाजैः आचारला-
जैरिवावाकिरन् तस्योपरिनिक्षिप्तवत्यइत्यर्थः सखाहिसखायमागतमुपचरतीतिभावः लाजाःपुंभूम्निचाक्षता इत्यमरः प्रसूनंकुसुमंसुममित्यम
रः १०

रघु॰ टी॰
२

सर्ग॰
२

धनुर्भृतइति धनुर्भृतोप्यस्यराज्ञः अनेनभयसंभावनादर्शिता तथापिविशंकैः निर्भीकैः अंतःकरणैः कर्तृभिः दययाकृपारसेन आर्द्रीभावोऽभिप्रायोयस्य
तद्दयार्द्रभावं तदारव्यातं तयार्द्रभावमेतदित्यारव्यातमित्यर्थः भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मस्वित्यमरः तथाविधंवपुर्विलोकयंत्योहरिण्यः
अक्ष्णांप्रकामविस्तारस्यात्यंतविशालतायाः फलमापुः विमलंकलुषीभवच्चचेतः कथयत्येवहितैषिणंरिपुंवेतिन्यायेन स्वांतःकरणवृत्तिप्रामाण्या
देवविस्रब्धंददृशुरित्यर्थः ११ सइति मारुतपूर्णरंध्रैः अतएवकूजद्भिः स्वरवद्भिः कीचकैर्वेणुविशेषैः वेणवःकीचकास्तेस्युर्येस्वनंत्यनिलोद्धताइ

धनुर्भृतोप्यस्यदयार्द्रभावमारव्यातमंतःकरणैर्विशंकैः विलोकयंत्योवपुरापुरक्ष्णांप्रकामविस्तारफलंहरिण्यः ११
सकीचकैर्मारुतपूर्णरंध्रैः कूजद्भिरापादितवंशकृत्यं शुश्रावकुंजेषुयशःस्वमुच्चैरुद्गीयमानंवनदेवताभिः १२

त्यमरः विशिष्टवाचकानांपदानांसतिपृथक्विशेषणवाचकपदसमभिव्याहारेविशेष्यमात्रपरत्वं उच्चैरापादितंसंपादितं वंशस्यकृत्यंकार्यंयस्मिन्क
र्मणितत्तथा वंशःसुषिरवाद्यविशेषः वंशादिकंतुसुषिरमित्यमरः कुंजेषुलतागृहेषु निकुंजकुंजौवाक्लीबेलतादिपिहितोदरइत्यमरः वनदेवता-
भिः उद्गीयमानं स्वंयशःशुश्राव श्रुतवान् वाक्यंतु सरंध्रत्वेन स्वरजननयोग्यतापरं हस्तिहितादीनांगजादिप्रयोगनियमोवा करिकलभादिवद्
कदोषोनेतिकश्चित् वेणुमात्रेपिकीचकइत्यन्यः १२ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७

पृक्तइति गिरिषुनिर्झराणां प्रवाहोनिर्झरोझरइत्यमरः तुषारैः सीकरैः तुषारौहिमसीकरावितिकोशः पृक्तःसंपृक्तः अनोकहानांवृक्षाणामाकंपि-
तानिईषत्कंपितानिपुष्पाणि तेषांयोगंधः सोस्यास्तीतितथोक्तः पुष्पगंधी ईषत्कंपित पुष्पगंधवान् एवंचशीतोमंदः सुरभिः पवनोवायुः अनात
पत्रं व्रतार्थंपरिहृतछत्रं अतएवआतपक्लांतं आचारेणपूतं शुद्धं तंनृपं सिषेवे आचारपूतत्वात्सराजाजगत्पावनस्य पवनस्यापिसेव्यआसीदि
तिभावः १३ शशामेति गोप्तरितस्मिन्राज्ञि वनंगाहमानेप्रविशतिसति वृष्ट्याविनापिदवाग्निर्वनाग्निः दवदावौवनानलइतिहैमः शशाम फलानां

पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकंपितपुष्पगंधी तमातपक्लांतमनातपत्रमाचारपूतंपवनःसिषेवे १३ शशा
मवृष्ट्यापिविनादवाग्निरासीद्विशेषाफलपुष्पवृद्धिः ऊनंनसत्वेष्वधिकोबबाधेतस्मिन्वनंगोप्तरिगाहमाने १४ सं
चारपूतानिदिगंतराणिकृत्वादिनांतेनिलयायगंतुं प्रचक्रमेपल्लवरागताम्राप्रभापतंगस्यमुनेश्चधेनुः १५

पुष्पाणांचवृद्धिः विशिष्यतइति विशेषा अतिशयिताआसीत् कर्मार्थेघञ्प्रत्ययः सत्वेषुजंतुषुमध्ये यतश्चनिर्धारणमितिसप्तमी अधिकः
प्रबलोव्याघ्रादिः ऊनंदुर्बलंहरिणादिकं नबबाधे नपीडितवान् १४ संचारपूतानीति पल्लवस्यरागोवर्णः पल्लवरागः रागोनुरक्तोमात्सर्येक्लेशादौ
लोहितादिष्वितिशाश्वतः सइवताम्रा पल्लवरागताम्रा पतंगस्यसूर्यस्यप्रभाकांतिः पतंगःपक्षिसूर्ययोरितिशाश्वतः मुनेश्चधेनुः दिगंतरा-
णि दिगवकाशान् अंतरमवकाशावधीत्यमरः संचारेणपूतानिशुद्धानिकृत्वा दिनांतेसायंकाले निलयाय अस्तमयाय धेनुपक्षेआलयायगंतुंप्रच
क्रमे १५

तामिति मध्यमलोकपालः भूमिपालः देवतापितृतिथीनांक्रियाः यागश्राद्धदानानि तान्येवअर्थः प्रयोजनंयस्याः तांधेनुं अन्वगनुपदंययौ सतां मतेनसद्भिर्मान्येन गतिबुद्धीत्यादिनावर्तमाने क्तः क्तस्यचवर्तमानइतिषष्ठी तेनराज्ञा उपपन्नायुक्तासाधेनुः सतांमतेनविधिना अनुष्ठानेनउपपन्ना साक्षात्प्रत्यक्षाश्रद्धा गुरुवेदशास्त्रोक्तेष्वर्थेषुआस्तिक्यबुद्ध्याविश्वासः श्रद्धेतिवेदांतवचनात् आस्तिक्यबुद्धिरिवबभौ १६ सइति सराजा पल्वलेभ्यः अल्पजलाशयेभ्यः उत्तीर्णानि निर्गतानि वराहाणांयूथानिकुलानियेषुतानि बर्हाण्येषांसंतीतिबर्हिणः मयूराः मयूरोबर्हिणोबर्हीत्यमरः फलबर्हाभ्यामिनच्वक्तव्यः आवासवृक्षाणांउन्मुखाः बर्हिणः येषुतानि श्यामायमानानि वराहबर्हिणादिमलिनिम्ना श्यामानिभवं

तांदेवतापित्रतिथिक्रियार्थामन्वग्ययौमध्यमलोकपालः बभौचसातेनसतांमतेनश्रद्धेवसाक्षाद्विधिनोपपन्ना १६ स·
पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ययौमृगाध्यासितशाद्वलानिश्यामायमानानिवनानिपश्यन् १७
आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषोनरेंद्रः उभावलंचक्रतुरंचिताभ्यांतपोवनावृत्तिपथंगताभ्याम् १८

तिश्यामायमानानि लोहितादिडाज्भ्यः क्यषितिक्यष्प्रत्ययः वाक्यषइत्यात्मनेपदेशानच् मृगैरध्यासिताः शाद्वलायेषुतानि शादाःशष्पाणि संतियेषुशाद्वलाः शष्पश्यामादेशाः शाद्वलः शादहरितइत्यमरः शादः कर्दमशष्पयोरितिविश्वः नडशादाड्वलजितिड्वलच्प्रत्ययः वनानिपश्यन् ययौ १७ आपीनेति गृष्टिः सकृत्प्रसूतागौः सकृत्प्रसूतागोर्गृष्टिरितिहलायुधः नरेंद्रश्चोभौ यथाक्रमं आपीनमूधः ऊधस्तुक्लीबमापीनमित्यमरः आपीनभारोद्वहने प्रयत्नात्प्रयासात् वपुषोगुरुत्वादाधिक्याच्च अंचिताभ्यांचारुभ्यां गताभ्यांगमनाभ्यां तपोवनादावृत्तेः पंथानं तपो

वनाद्वृत्तिपथं ऋक्पूरित्यादिना ऽ कारप्रत्ययः समासांतः अलंचक्रतुः भूषितवंतौ १८ वसिष्ठेति वसिष्ठधेनोरनुयायिनमनुचरं वनांतादावर्त्तमानं प्र
त्यागतं तं दिलीपं वनितासुदक्षिणा नि मेषेणालसामंदा पक्ष्मणां पंक्तिर्यस्याः सा निर्निमेषासतीत्यर्थः लोचनाभ्यां करणाभ्यां उपोषिताभ्यामिव उप
वासो भोजननिवृत्तिस्तद्वद्भ्यामिव वसतेः कर्तरिक्तः पपौ यथोपोषितोऽतितृष्णया जलमधिकं पिबति तद्वदतितृष्णयाऽधिकं व्यलोकयदि-
त्यर्थः १९ पुरस्कृतेति वर्त्मनिमार्गे पार्थिवेन पृथिव्याः ईश्वरेण तस्येश्वरइत्यण्प्रत्ययः पुरस्कृता अग्रतः कृता धर्मस्य पत्नी धर्मार्थपत्नी-
त्यर्थः अश्वघासादिवत्तादर्थ्येषष्ठीसमासः पार्थिवस्य धर्मपत्न्याप्रत्युद्गता साधेनुः तदंतरे तयोर्दंपत्योर्मध्ये दिनक्षपयोर्दिनरात्र्योर्म-

वसिष्ठधेनोरनुयायिनंतमावर्त्तमानं वनितावनांतात् पपौनिमेषालसपक्ष्मपंक्तिरुपोषिताभ्यामिवलोचनाभ्यां १९ पुर
स्कृतावर्त्मनिपार्थिवेनप्रत्युद्गतापार्थिवधर्मपत्न्या तदंतरेसाविरराजधेनुर्दिनक्षपामध्यगतेवसंध्या २० प्रदक्षिणी
कृत्यपयस्विनींतांसुदक्षिणासाक्षतपात्रहस्ता प्रणम्यचानर्चविशालमस्याःशृंगांतरं द्वारमिवार्थसिद्धेः २१ व
त्सोत्सुकापिस्तिमितासपर्यांप्रत्यग्रहीत्सेतिननंदतुस्तौ भक्त्योपपन्नेषुहितद्विधानांप्रसादचिह्नानिपुरःफलानि २२

ध्यगतासंध्येव विरराज २० प्रदक्षिणीकृत्येति अक्षतानां पात्रेण सह वर्ततइतिसाक्षतपात्रः हस्तोयस्याः सा सुदक्षिणा पयस्विनीं प्रशस्तक्षी-
रांतांधेनुं प्रदक्षिणीकृत्य प्रणम्यच अस्याः धेन्वाः विशालंशृंगांतरं शृंगमध्यं अर्थसिद्धेर्द्वारमिव प्रवेशनमार्गमिव आनर्च अर्चयामास अ
र्चतेर्भौवादिकाल्लिट् २१ वत्सोत्सुकेति साधेनुः वत्सोत्सुकापि वत्सेउत्कंठितापि स्तिमितानिश्चलासती सपर्यांपूजां प्रत्यग्रहीत् इतिहेतो
स्तौदंपती ननंदतुः पूजास्वीकारस्यानंदहेतुत्वमाह भक्त्येति पूज्येष्वनुरागोभक्तिः तयोपपन्नेषुयुक्तेषुविषये तद्विधानां तस्याः धेनोः विधे

वविधाप्रकारोयेषांतेषां महतामित्यर्थः प्रसादस्यचिन्हानि लिंगानि पूजास्वीकारादीनि पुरःफलानि पुरोगतानि प्रत्यासन्नानिफलानियेषांतानि हि
अविलंबितफलसूचकलिंगदर्शनादानंदोयुज्यतइत्यर्थः २२ गुरोरिति भुजोच्छिन्नरिपुर्दिलीपः सदारस्य दारैररुंधत्यासहवर्तमानस्यगुरोः उ-
भयोरपीत्यर्थः पादौनिपीड्याभिवंद्य सांध्यं संध्यायांविहितं विधिं अनुष्ठानंच समाप्य दोहावसानेनिषण्णामासीनां दोग्ध्रीमेवदोहन-
शीलामेव तृन्नितितृन्प्रत्ययः पुनर्भेजे सेवितवान् दोग्ध्रीमितिनिरुपपदप्रयोगात्कामधेनुत्वंगम्यते २३ तामिति गोसारक्षकः गृहिणीस॰

गुरोःसदारस्यनिपीड्यपादौसमाप्यसांध्यंचविधिंदिलीपः दोहावसानेपुनरेवदोग्ध्रींभेजेभुजोच्छिन्नरिपुर्निषण्णां २३॰
तामंतिकन्यस्तबलिप्रदीपामन्वास्यगोप्तागृहिणीसहायः क्रमेणसुप्तामनुसंविवेशसुप्तोत्थितांप्रातरनूदतिष्ठत् २४॰
इत्थंव्रतंपालयतःप्रजार्थंसमंमहिष्यामहनीयकीर्तेः सप्तव्यतीयुस्त्रिगुणानितस्यदिनानिदीनोद्धरणोचितस्य २५

हायः पत्नीद्वितीयःसन् उभावपीत्यर्थः अंतिकेन्यस्ताबलयःप्रदीपाश्चयस्यास्तांतथोक्तां तांपूर्वोक्तां निषण्णां धेनुं अन्वास्यअनूपविश्य क्रमेणसुप्ता-
मनुअनंतरं संविवेश सुष्वाप प्रातःसुप्तोत्थितामनुउदतिष्ठत् उत्थितवान् अत्रानुशब्देनधेनुराजव्यापारयोः पौर्वापर्यमुच्यते क्रमशब्देनधेनुव्या॰
पाराणामित्यपौनरुक्त्यं कर्मप्रवचनीययुक्तेद्वितीया २४ इत्थमिति इत्थमनेनप्रकारेण प्रजार्थंसंतानाय महिष्यासमं अभिषिक्तपत्न्यासह ५
कृताभिषेकामहिषीत्यमरः व्रतंपालयतः धारयतः महनीयापूज्या कीर्तिर्यस्य तस्य दीनानामुद्धरणे विमोचने उचितस्य तस्य नृप-

स्य त्रयोगुणाआवृत्तयोयेषांतानि त्रिगुणानि त्रिरावृत्तानिसप्तदिनानि एकविंशतिदिनानि व्यतीयुः २५ अन्येद्युरिति अन्येद्युः अन्यस्मिन्-
दिवसे द्वाविंशेदिवसे सद्यःपरुत्परारीत्यादिनानिपातनादव्ययं अद्यात्रान्ह्यथपूर्वेन्हीत्यादौपूर्वोत्तरापरात् तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयइ-
त्यमरः मुनिहोमधेनुः आत्मानुचरस्यनृपस्य भावंअभिप्रायंदृढभक्तिकं भावोभिप्रायआशयइतियादवः जिज्ञासमाना ज्ञातुमिच्छंती ज्ञा-
श्रुस्मृदृशांसनइत्यात्मनेपदेशानच् प्रपतत्यस्मिन्निति प्रपातः पतनप्रदेशः गंगायाः प्रपातः तस्यांते समीपे निरूढानिजातानि शष्पाणि बालतृ-

अन्येद्युरात्मानुचरस्यभावंजिज्ञासमानामुनिहोमधेनुः गंगाप्रपातांतनिरूढशष्पंगौरीगुरोर्गव्हरमाविवेश २६
सादुष्प्रधर्षामनसापिहिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन अलक्षिताऽभ्युत्पतनोनृपेणप्रसह्यसिंहःकिलतांचकर्ष २७
तदीयमाक्रंदितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् रश्मिष्विवादायनगेंद्रसक्तांनिवर्तयामासनृपस्यदृष्टिं २८

णानियस्मिन्तत् शष्पं बालतृणंघासइत्यमरः गौरीगुरोः पार्वतीपितुः गव्हरंगुहां आविवेश प्रविवेश २६ सेति साधेनुः हिंस्रैर्व्याघ्रादिभिः म
नसापिदुष्प्रधर्षा दुर्धर्षेतिहेतोः अद्रिशोभायांप्रहितेक्षणेन दत्तदृष्टिनानृपेण अलक्षितमभ्युत्पतनमाभिमुख्येनउत्पतनंयस्यससिंहः तां-
धेनुं प्रसह्य हठात् प्रसह्य तुहठार्थकमित्यमरः चकर्ष किलेत्यलीके २७ तदीयमिति गुहानिबद्धेन प्रतिशब्देन प्रतिध्वनिना दीर्घं तस्याइ
दंतदीयं आक्रंदितं आर्तघोषणं आर्तेष्वापन्नेषुसाधोर्हितकारिणोनृपस्य नगेंद्रसक्तांदृष्टिं रश्मिषु प्रग्रहेषु किरणप्रग्रहौरश्मी इत्यमरः आ-

दायेवगृहीत्वेवनिवर्तयामास २८ सइति धनुर्धरः सन्नृपः पाटलायां श्वेतरक्तवर्णायांगवि श्वेतरक्तस्तुपाटलइत्यमरः तस्थिवांसं संस्थितं क्वसुश्चेतिक्व
सुप्रत्ययः केसरिणं सिंहं सानुमतोऽद्रेः धातोर्गैरिकस्यविकाराधातुमयी तस्यामधित्यकायामूर्ध्वभूमौ उपत्यकाद्रेरासन्नाभूमिरूर्ध्वमधित्यकेत्यमरः
उपाधिभ्यांत्यकन्नासन्नारूढयोरितिनित्यकन्प्रत्ययः प्रफुल्लोविकसितः तं फुल्लविकसन इतिधातोः पचाद्यच् लोध्राख्यंद्रुममिवददर्श प्रफुल्लमितित
कारपाठे ञिफलाविशरणइतिधातोः कर्तरिक्तः उत्परस्यातइत्युकारादेशः २९ ततइति ततः सिंहदर्शनानंतरं मृगेंद्रगामी सिंहगामी शरणं रक्ष
णं शरणंगृहरक्षित्रोरित्यमरः शरणंरक्षणेगृहेइतियादवः शरणेसाधुःशरण्यः तत्रसाधुरितियत्प्रत्ययः प्रसभेन बलात्कारेण उत्थृताअरयोयेनस

सपाटलायांगवितस्थिवांसंधनुर्धरः केसरिणंददर्श अधित्यकायामिवधातुमय्यांलोध्रद्रुमंसानुमतःप्रफुल्लं २९ ततो
मृगेंद्रस्यमृगेंद्रगामीवधायवध्यस्यशरंशरण्यः जाताभिषंगोनृपतिर्निषंगादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ३० वामेतरस्त
स्यकरःप्रहर्तुर्नखप्रभाभूषितकंकपत्रे सक्तांगुलिःसायकपुंखएवचित्रार्पितारंभइवावतस्थे ३१

नृपतिः राजा जाताभिषंगः जात पराभवः सन् अभिषंगः पराभवइत्यमरः वध्यस्य वधार्हस्य दंडादिभ्योयदितियत्प्रत्ययः मृगेंद्रस्यवधाय निषंगात्तू
णीरात् तूणोपासंगतूणीरनिषंगाइषुधिर्द्वयोरित्यमरः शरमुद्धर्तुमैच्छत् ३० वामेति प्रहर्तुस्तस्यवामेतरः दक्षिणःकरः नखप्रभाभिराभूषितानिविच्छु
रितानि कंकस्यपक्षिविशेषस्यपत्राणियस्यतस्मिन् कंकःपक्षिविशेषेस्याद्गुप्ताकारेयुधिष्ठिरेइतिविश्वः कंकस्तुकर्कटइतियादवः सायकस्यपुंखएव
कर्तर्याख्येमूलप्रदेशे कर्तरीपुंखइतियादवः सक्तांगुलिःसन् चित्रार्पितारंभः चित्रलिखितशरोद्धरणोद्योगइवावतस्थे ३१ ५ ५ ५ ५ ६

बाह्विति बाहोः प्रतिष्टंभेन प्रतिबंधेन विवृद्धमन्युः प्रवृद्धरोषो राजा मंत्रौषधिभ्यां रुद्धवीर्यः प्रतिबद्धशक्तिः भोगी सर्प इव भोगी राजभुजंगयोरिति शा-
श्वतः अभ्यर्णमासन्नं आगस्कृतमपराधकारिणं अस्पृशद्भिः स्वतेजोभिः अंतरदह्यत अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपीति यादवः ३२ तमि
ति निगृहीता पीडिता धेनुर्येन स सिंहः आर्याणां सतां गृह्यं पक्ष्यं पदास्वैरिबाह्यापक्षेषु चेति क्यप् मनुवंशस्य केतुं चिन्हं केतुवद्व्यावर्तकं भूपा
लेषु सिंह इव उरुसत्वो महाबलस्तं आत्मनो वृत्तौ बाहुस्तंभरूपे व्यापारे अभूतपूर्वत्वाद्विस्मितं कर्तरि क्तः तं दिलीपं मनुष्यवाचाकरणेन पु-

बाहुप्रतिष्टंभविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः राजा स्वतेजोभिरदह्यतान्तर्भोगीव मंत्रौषधिरुद्धवीर्यः ३२
तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुं विस्माययन्विस्मितमात्मवृत्तौ भूपालसिंहं निजगाद सिंहः ३३

नर्विस्माययन् विस्मयं आश्चर्यं प्रापयन् निजगाद ष्मिङ् ईषद्धसन इति धातोर्णिचि वृद्धौ अयादेशो शतृप्रत्यये च सति विस्माययन्निति रू-
पं सिद्धं विस्मापयन्निति पाठे आत्वं पुगागमोपि वक्तव्यः तच्चिंत्यं नित्यं स्मयतेरिति हेतुस्मयविवक्षायामेव भीस्म्योर्हेतुभय इति आत्मने-
पदे विस्मापयमान इति स्यात् तस्मान्मनुष्यवाचा विस्माययन्निति रूपं स्फ वचनं करणविवक्षायां न कश्चिद्दोषः ३३ ७ ७ ७ ७ ७

अलमिति हेमहीपाल तवश्रमेणायासेनालंपर्याप्तंसाध्याभावाच्छ्रमोनकार्यइत्यर्थः अत्रगम्य मानसाधनक्रियापेक्षया श्रमस्यकरणत्वात्तृतीया उ
क्तंच नकेवलंश्रूयमाणैवक्रियानिमित्तं करणभावस्यापितुगम्यमानाऽपीति अलंभूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः किमितिश्रमोनक्रि
यतामित्यत्राह इतः अस्मिन्मयि सार्वविभक्तिकस्तसिः प्रयुक्तंप्राक्षिप्तमप्यस्त्रं वृथानिष्फलंस्यात् भवनार्थादस्तेर्लिङ् तथाहि पादपानां वृ
क्षाणां उन्मूलने उत्पाटने शक्तिः सामर्थ्यंयस्यतत् तथोक्तं मारुतस्य वायोः रंहोवेगः शिलोच्चये अद्रौ नमूर्च्छति नप्रागल्भ्येनप्रसरति मूर्च्छा

अलंमहीपालतवश्रमेणप्रयुक्तमप्यस्त्रमितोवृथास्यात् नपादपोन्मूलनशक्तिरंहःशिलोच्चयेमूर्च्छतिमारुतस्य ३४ कै
लासगौरंवृषमारुरुक्षोःपादार्पणानुग्रहपूतपृष्ठं अवेहिमांकिंकरमष्टमूर्तेःकुंभोदरंनामनिकुंभतुल्यम् ३५

वृद्धिः अद्रेरुन्मूलनशक्तौ वृद्धिंनलभतइतितात्पर्यार्थः ३४ कुतस्तवेदृशंसामर्थ्यमित्यत्राह कैलासेति भोराजन् कैलासवत् गौरंशुभ्रं वृषं आरु-
रुक्षोरारोढुमिच्छोः चामीकराभंशुभ्रंचगौरमाहुर्मनीषिणइतिशाश्वतः अष्टौमूर्तयोयस्यतस्याष्टमूर्तेः शिवस्य पादार्पणंपादन्यासः सएवानु-
ग्रहः प्रसादस्तेनपूतं शुद्धंपृष्ठं यस्यसतं ईशोमेपृष्ठे चरणंन्यस्य वृषमारोहतीतिभावः निकुंभोगणभेदः कुंभकर्णपुत्रः तत्समं कुंभोदरंनाम किंक
रंभृत्यंमां अवेहि जानीहि अवेहीत्यत्रपररूपंनवृद्धिः अवनिश्चतथावायुर्यजमानजलाग्नयः सूर्यश्चंद्रोनभश्चैताअष्टौशंकरमूर्तयः ३५ ७ ७ ७

अत्रस्थितौ सिंहत्वेचकारणमाह अमुमिति भोनृप अमुंदेवदारुं पुरोग्रेपश्यसीति काकुः असौदेवदारुः वृषभोध्वजोयस्यतेनशिवेनपुत्रीकृतः पुत्रभा-
वंनीतः पुत्रत्वेनस्वीकृतः अभूततद्भावेच्विः कथमित्यत्राह योदेवदारुःस्कंदस्यमातुः गौर्याः हेम्नः कुंभाविवस्तनौ ततोनिःसृतानांनिर्गतानां पयसांपा
नीयानांरसंजानातीतिरसज्ञः स्वादज्ञः स्कंदपक्षे हेमकुंभाविवस्तनाविितिविग्रहः पयसां क्षीराणां पयःक्षीरंपयोंबुचेत्यमरः पुत्रोपिस्तननिर्गत-
क्षीररसज्ञः स्यात् उदकदानादिना तथावर्धितइत्यर्थः स्कंदमातृग्रहणेन कार्तिकेयसाम्यं स्कंदसमानप्रेमास्पदइतिभावः अर्धर्चादिपाठाद

अमुंपुरःपश्यसिदेवदारुंपुत्रीकृतोऽसौवृषभध्वजेन योहेमकुंभस्तननिःसृतानांस्कंदस्यमातुःपयसांरसज्ञः ३६ कंडू-
यमानेनकटंकदाचिद्वन्यद्विपेनोन्मथितात्वगस्य अथैनमद्रेस्तनयाशुशोचसेनान्यमालीढमिवासुरास्त्रैः ३७.

र्धर्चाःपुंसिचेतिदेवदारोःपुंस्त्वमपि यथा ऽभ्रैवशशंसदेवदारवइति ३६ कंडूयमानेनेति कटं कपोलं कटः श्रोणौक्रियाकारेकलिंजेतिशयेशवे सम-
येगजगंडेचेतिविश्वः कंडूयमानेनघर्षता कंड्वादिभ्योयक् ततः शानच् वनेसाधुर्वन्यस्तेनद्विपेन कदाचिदस्यदेवदारोः त्वग्वल्कलं उन्मथितोन्मूलि
ता अथत्वगुन्मथनानंतरं अद्रेस्तनयागौरी असुरास्त्रैर्दैत्यप्रहरणैरालीढंव्याप्तमित्यर्थः सेनांनयतीतिसेनानीः स्कंदः सत्सूद्विषेत्यादिनाक्विपि
एरनेकाचइतियण् पार्वतीनंदनःस्कंदःसेनानीरित्यमरः तमिवएनंदेवदारुं शुशोच शुचेः सकर्मकत्वंतुप्रयोगात् रुदेः उपारुददेवतदभ्यंत

रघु॰टी॰ रंगइतिमद्विप्रयोगवत् आपूर्वत्वात्सकर्मकत्वमितिकश्चित् ३७ तदेतितदातत्कालःप्रभृतिरादिर्यस्मिन्कर्मणितत्तथा तदाप्रभृत्येव ततआरभ्यै सर्ग॰
८ व वनद्विपानांवनकरिणां त्रासार्थंभयार्थं शूलभृता शंभुना अंकंसमीपमागताः प्राप्ताः सत्वाः प्राणिनोवृत्तिर्जीवितंयस्मिन्तत् अंकःसमीपमुत्सं- २
गेचिन्हेस्थानापराधयोरितिकेशवःसिंहत्वं सिंहरूपत्वंविधाय अस्मिन्नद्रिकुक्षौगुहायांअहंव्यापारितोनियुक्तः सिंहेनगजाः भीष्यंतेइतिसिंह-

तदाप्रभृत्येववनद्विपानांत्रासार्थमस्मिन्नहमद्रिकुक्षौ व्यापारितःशूलभृताविधायसिंहत्वमंकागतसत्ववृत्ति ३८ त-
स्यालमेषाक्षुधितस्यतृप्त्यैप्रदिष्टकालापरमेश्वरेण उपस्थिताशोणितपारणामेसुरद्विषश्चांद्रमसीसुधेव ३९.

लंकृतमित्यर्थः ३८ तस्येतिपरमेश्वरेणप्रदिष्टोनिर्दिष्टः कालोवेलाभृतिर्वायस्याः सा महालयेयममेभृत्यौकालःसमयनृष्णयोरितिशाश्वतः उ-
पस्थिता प्राप्ताएषागोरूपा शोणितपारणाभोजनं सुरद्विषःराहोश्चंद्रमसइयंचांद्रमसी इंदुसंबंधिनीसुधेवअमृतमिव क्षुधितस्य बुभु- ६
क्षितस्य मेममतृप्त्यै अलंपर्याप्ता नमस्वस्तीत्यादिनाचतुर्थी उपोषितस्यभोजनंपारणेति उपवासध्वनिः भोजनहेतुत्वात् गौरेव पारणेतिकश्चि
त् ३९

सइति सएवंउपायशून्यस्त्वं लज्जांविहायत्यक्त्वानिवर्तस्व निवृत्तोभव बुध्वागच्छेत्यर्थः यतोभवान् गुरोः दर्शिताप्रकाशिता शिष्यभक्तिः शिष्यकर्तव्या भक्तिर्येनसतथोऽक्तो सि इत्यनेनापराधपरिहारः ननुगुरोर्धनमुपेक्ष्यतत्समीपेऽकीर्तिभाक्कथंयामीतिचेत्तत्राह शस्त्रेणेति यद्द्रव्यं रक्षायोग्यंवस्तु शस्त्रेणाप्यधेन शस्त्रमायुधलोहयोरित्यमरः अशक्यारक्षायस्यतत् अशक्यरक्षं रक्षितुमशक्यमित्यर्थः तद्द्रव्यंनष्टमपिशस्त्रभृतामस्त्रधारिणां यशोनक्षिणोति नहिनस्ति अशक्यार्थेष्वप्रतिविधानंनदोषायेतिभावः क्षिहिंसायामितिस्वादिकस्यप्रयोगः तनादिकस्योविकरणस्य क्षिणः पाणिन्याचार्यमते गणितत्वात् ४० इतीतिपुरुषाणामधिराजोनृपः इतिप्रगल्भं मृगाधिराजस्य सिंहस्यवचोनिशम्य श्रुत्वा गिरिरस्यास्तीतिलोमादित्वाच्छः गिरिशंयति-

सत्वंनिवर्तस्वविहायलज्जांगुरोर्भवान्दर्शितशिष्यभक्तिः शस्त्रेणरक्ष्यंयदशक्यरक्षंनतद्यशःशस्त्रभृतांक्षिणोति ४०.
इतिप्रगल्भंपुरुषाधिराजोमृगाधिराजस्यवचोनिशम्य प्रत्याहतास्त्रोगिरिशप्रभावादात्मन्यवज्ञांशिथिलीचकार ४१.

उपभोगेनतनूकरोति शोतनूकरणइत्यस्माद्धातोरातोनुपसर्गेकः गिरोडश्छंदसीतिच्छंदस्यपिविहितं भाषायांप्रयुज्यते आरफश्लक्ष्णिवदिति-क्षीरस्वामिनोक्तत्वात् गिरिशस्येश्वरस्य प्रभावात् माहात्म्येन प्रत्याहतास्त्रः कुंठितास्त्रः सन् आत्मनि स्वस्मिन्विषये अवज्ञामपमानं समीपस्थमप्यरिंवारयितुमसमर्थइत्येवंरूपां शिथिलीचकार तत्याजेत्यर्थः अभूततद्भावेच्विः च्वौचेतिदीर्घः अवज्ञातोहमितिनिर्वेदंनप्रापेत्यर्थः समानेषुक्षत्रियाणामभिमानोनसर्वेश्वरंप्रतीतिभावः ४१ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७

प्रतीति सएवपूर्वः प्रथमः संगः प्रतिबंधोयस्यतस्मिन् तत्पूर्वसंगे इषुप्रयोगे वितथप्रयत्नोविफलप्रयासः अतएव वज्रं कुलिशं मुमुक्षन् मोक्तुमिच्छन् अंबकं लो- चनंदृग्दृष्टिलोचनचक्षुर्नयनांबकेक्षणाक्षीणीतिहलायुधः त्रीण्यंबकानियस्यसत्र्यंबकोहरस्तस्यवीक्षितेनवीक्षणेन जडीकृतः निष्पंदीकृतः वज्रंपाणौ- यस्यसवज्रपाणिरिंद्रः प्रहरणार्थेभ्यः परेनिष्ठासप्तम्यौभवतइतिवक्तव्यमितिपाणेः सप्तम्यंतस्योत्तरनिपातः सइवस्थितः नृपः एनंसिंहं प्रत्यब्रवीत् चकारःप्र- थमश्लोकापेक्षः शिथिलीचकारेत्यनेनसमुच्चयः प्रत्याहेतिपाठेप्रत्यक्षवाचेत्यर्थः बाहुंसवज्रंशक्रस्यक्रुद्धस्यास्तंभयत्प्रभुरितिमहाभारते ४२ संरुद्धेति मो-

प्रत्यब्रवीच्चैनमिषुप्रयोगेतत्पूर्वसंगेवितथप्रयत्नः जडीकृतस्त्र्यंबकवीक्षितेनवज्रंमुमुक्षन्निववज्रपाणिः ४२ संरुद्ध- चेष्टस्यमृगेंद्रकामंहास्यंवचस्तद्यदहंविवक्षुः अंतर्गतंप्राणभृतांहिवेदसर्वंभवान्भावमतोऽभिधास्ये ४३॰

मृगेंद्र संरुद्धचेष्टस्यप्रतिबद्धव्यापारस्यमम तद्वचोवाक्यं कामंहास्यं परिहसनीयं यद्वचः सत्वंमदीयेनेत्यादिकं अहंविवक्षुः वक्तुमिच्छुरस्मि तर्हितूष्णीं- स्थीयतामित्याशंक्य ईश्वरकिंकरत्वात्सर्वज्ञंत्वांप्रतिनहास्यमित्याह अंतरिति हियतः भवान्प्राणभृतां अंतर्गतं हृद्गतं वाग्वृत्त्या बहिरप्रकाशितमेव- सर्वं भावं वेद वेत्ति विदोलटोवेतिणलादेशः अतोभिधास्ये वक्ष्यामि तद्वचइति प्रकृतंकर्मसंबध्यते अन्येत्वीदृग्वचनमाकर्ण्यासंभावितार्थमेतदित्युप- हसंति अतस्तत्र मौनमेव भूषणं त्वंतुवाङ्मनसोरेकविध एवायमितिजानासि अतोभिधास्ये यद्वास्यमहंविवक्षुरित्यर्थः ४३ ॥ ॥ ॥ ॥ ९

मान्यइति प्रत्यवहारः प्रलयः स्थावराणां तरुशैलादीनां जंगमानां मानुषादीनां सर्गस्थितिप्रत्यवहारेषुहेतुः सईश्वरोमे मान्यः पूज्यः अलंघ्यशासनइत्य-
र्थः शासनंचसिंहत्वमंकागतसत्ववृत्तीत्युक्तरूपं तर्हिविसृज्यगम्यतामितिनेत्याह गुरोरिति पुरस्तादग्रे नश्यत् आहिताग्नेर्गुरोरिदंधनमपि गोरूपं अनुपे-
क्षणीयं आहिताग्नेरितिविशेषणेनअनुपेक्षाकारणं हविःसाधनत्वंसूचयति ४४ सत्वमिति सोंऽकागतसत्ववृत्तिस्त्वं मदीयेनदेहेन शरीरस्य वृत्तिं जी-
वनं निर्वर्तयितुंसंपादयितुंप्रसीद दिनावसाने उत्सुकोमातामामागमिष्यतीतिउत्कंठितोबालवत्सोयस्याःसा महर्षेरियंधेनुर्विसृज्यतां विमुच्यतां-

मान्यःसमेस्थावरजंगमानांसर्गस्थितिप्रत्यवहारहेतुः गुरोरपीदंधनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयं ४४ सत्वंमदी
येनशरीरवृत्तिंदेहेननिर्वर्तयितुंप्रसीद दिनावसानोत्सुकबालवत्साविसृज्यतांधेनुरियंमहर्षेः ४५ अथांधकारंगिरि-
गह्वराणांदंष्ट्रामयूखैःशकलानिकुर्वन् भूयःसभूतेश्वरपार्श्ववर्तीकिंचिद्विहस्यार्थपतिंबभाषे ४६ एकातपत्रंजगतः
प्रभुत्वंनववयःकांतमिदंवपुश्च अल्पस्यहेतोर्बहुहातुमिच्छन्विचारमूढःप्रतिभासिमेत्वं ४७ .

४५ अथेति अथभूतेश्वरस्य पार्श्ववर्ती शिवस्यअनुचरः ससिंहः गिरेर्गह्वराणां गुहानां देवखातबिलेगुहेत्यमरः अंधकारं ध्वांतं दंष्ट्रयो-
र्मयूखैः शकलानि खंडानिकुर्वन्निरस्यन्नित्यर्थः किंचिद्विहस्यार्थपतिंनृपं भूयोबभाषे ह्रासेकारणं अल्पस्यहेतोर्बहुहातुमिच्छन्नित्यादि
वक्ष्यमाणंद्रष्टव्यं ४६ एकातपत्रमिति एकातपत्रं एकछत्रं जगतःप्रभुत्वं नववयोयौवनं इदंकांतंरम्यंवपुश्चेत्येवंबहु अल्पस्यहेतोरल्पेन
कारणेन अल्पफलायेत्यर्थः षष्ठीहेतुप्रयोगइतिषष्ठी हातुंत्यक्तुमिच्छंस्त्वं मेमम विचारे कार्याकार्यविमर्शे मूढोमंदः प्रतिभासि ४७ ७ ७

भूतेति तव भूतेष्वनुकंपा दयाचेत् कृपा दयानुकंपा स्यादित्यमरः कृपयैव प्रवर्तसे चेदित्यर्थः तर्हि त्वदंते तव विनाशे सति इयमेका गौः स्वस्तिः क्षेममस्यास्तीति स्व
स्तीमती भवेत् जीवेदित्यर्थः स्वस्त्याशीः क्षेमपुण्यादावित्यमरः हे प्रजानाथ त्वं जीवन् सन् पुनः पितेव प्रजाः उपप्लवेभ्यः विपद्भ्यः शश्वत्सदा पुनः सदार्थयोः श
श्वदित्यमरः पासि रक्षसि स्वप्राणव्ययेनैकधेनुरक्षणाद्वरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः ४८ न धर्मलोपादियं प्रवृत्तिः किंतु गुरुभयादित्या
ह अथेति अथ पक्षांतरे एकैव धेनुर्यस्य तस्माद्यं कोपकारणोपन्यास इति विज्ञेयं अत एवापराधे गवोपेक्षालक्षणे सति चंडादतिकोपनात् चंडस्त्व
त्यंतकोपन इत्यमरः अत एव कृशानुः प्रतिमा उपमा यस्य तस्मात् अग्निकल्पाद्गुरोर्बिभेषि इति काकुः भीत्रार्थानां भयहेतुरित्यपादानत्वात्पंचमी अल्पवि

भूतानुकंपा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदंते जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ४८ अथैकधे
नोरपराधचंडाद्गुरोः कृशानुप्रतिमाद्बिभेषि शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ४९ तद्रक्ष
कल्याणपरंपराणां भोक्तारमूर्जस्वलमात्मदेहं महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैंद्रमाहुः ५०

त्तस्य धनहानिरतिदुःसहेति भावः अस्य गुरोर्मन्युः क्रोधः मन्युर्दैन्ये क्रतौ क्रुधीत्यमरः घटा इव ऊधांसि यासां ताः घटोध्नीः ऊधसोनङिऽत्यनङादे
शः बहुव्रीहेरूधसो ङीष् कोटिशः गाः स्पर्शयता प्रतिपादयता विश्राणनं वितरणं स्पर्शनं प्रतिपादनमित्यमरः भवता विनेतुमपनेतुं शक्यः ४९ तद्र
क्षेति तत् तस्मात्कारणात् कल्याणपरंपराणां भोक्तारं कर्मणि षष्ठी ऊर्जो बलमस्यास्तीति ऊर्जस्वलं ज्योत्स्नातमिस्रेत्यादिना वलच् प्रत्ययांतो निपा
तः आत्मदेहं रक्ष न तु गामुपेक्ष्यात्मदेहरक्षणे स्वर्गहानिः स्यादित्याह महीतलेति ऋद्धं समृद्धं राज्यं महीतलस्पर्शनमात्रेण भूतलसंबंधमात्रे· १०

त्रेणभिन्नं ऐंद्रं इंद्रसंबंधि पदंस्थानमाहुः स्वर्गान्नभिद्यतइत्यर्थः ५० एतावदिति मृगेंद्रे एतावदुक्त्वा विरते मूकी भूतेसति गुहागतेनास्य सिंहस्य प्रति-
स्वनेन शिलोच्चयः शैलोपि अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाइत्यमरः प्रीत्या क्षितिपालं तमेवार्थंउच्चैरभाषतेवेत्युत्प्रेक्षा भाषिरयंब्रुविसमा
नार्थत्वाद्द्विकर्मकः ब्रुविस्तावद्द्विकर्मकेषुपठितः तदुक्तं दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ब्रुविशासिगुणेनचयत्सचतेतद
कीर्तितमाचरितंकविनेति ५१ निशम्येति देवानुचरस्येश्वरकिंकरस्य सिंहस्य वाचंनिशम्य मनुष्यदेवोराजा पुनरप्युवाच किंभूतःसन् तेनसिंहेनयदध्यासि
तंतत्तदध्यासितं तदाक्रमणं नपुंसकेभावेक्तः तेनकातरेअक्षिणीयस्याःसा बहुव्रीहौसक्थ्यक्ष्णोःस्वांगात्षच् षिद्गौरादिभ्यश्चेतिङीष् किंवावक्ष्यतीति-

एतावदुक्त्वाविरतेमृगेंद्रेप्रतिस्वनेनास्यगुहागतेन शिलोच्चयोऽपिक्षितिपालमुच्चैःप्रीत्यातमेवार्थमभाषतेव ५१ निशम्य
देवानुचरस्यवाचंमनुष्यदेवःपुनरप्युवाच धेन्वातदध्यासितकातराक्ष्यानिरीक्ष्यमाणःसुतरांदयालुः ५२ क्षतात्-
किलत्रायतइत्युदग्रःक्षत्रस्यशब्दोभुवनेषुरूढः राज्येनकिंतद्विपरीतवृत्तेःप्राणैरुपक्रोशमलीमसैर्वा ५३

प्रीत्येवस्थितयेत्यर्थः धेन्वानिरीक्ष्यमाणः अतएवसुतरां दयालुःसन् सुतरामित्यत्रद्विवचनविभज्योपपदेतरबीयसुनावित्यादिना सुशब्दात्तरप्
किमेत्तिङव्ययेत्यादिना आम्प्रत्ययः तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञा ५२ किमुवाचेत्याह क्षतादिति क्षणुहिंसायामितिधातोःसंपदादित्वा-
त्क्विप् गमादित्वादनुनासिकलोपेतुगागमेच क्षदितिरूपंसिद्धं क्षतोनाशात्त्रायतइतिक्षत्रं सुपीतियोगविभागात्कप्रत्ययः तामेतांव्युत्पत्तिंकविरर्थतो
ऽनुक्रामति क्षतादित्यादिना उदग्रः उन्नतः क्षत्रस्यक्षत्रवर्णस्यशब्दोवाचकः क्षत्रशब्दइत्यर्थः क्षतान्नाशात्त्रायतइतिव्युत्पत्त्या भुवनेषुरू

दः किल प्रसिद्धः खलु नाश्वकर्णादिवत्केवलंरूढः किंतु पंकजादिवद्योगरूढ इत्यर्थः अतः किमित्यत आह तस्येति क्षत्रशब्दस्य विपरीतवृत्तेर्विरुद्ध-
व्यापारस्य क्षतात्त्राणमकुर्वतः पुंसो राज्येन किं उपक्रोशमलीमसैर्निंदामलिनैः उपक्रोशो जुगुप्सा च कुत्सा निंदा च गर्हणेत्यमरः ज्योत्स्नातमिस्रेत्या-
दिना मलीमसशब्दो निपातितः तैः प्राणैर्वा किं निंदितस्य सर्वं व्यर्थमित्यर्थः अनेनैकातपत्रमित्यादिना श्लोकद्वयेन यदुक्तं तत्रोत्तरमिति वेदितव्य
म् ५३ अथैकधेनोरित्यत्रोत्तरमाह कथमिति अनुनयः क्रोधापनयः महर्षेरनुनयोऽन्यासां पयस्विनीनां दोग्ध्रीणां विश्राणनाद्दानात्कथं नु शक्यः क
थं क्रोधापनयः कर्तुं शक्यते न शक्यत इत्यर्थः अत्र हेतुमाह इमां गां सुरभेः कामधेनोः पंचमी विभक्त इति पंचमी अनूनामन्यूनामवेहि जानीहि त

कथं नु शक्योऽनुनयो महर्षेर्विश्राणनादन्यपयस्विनीनां इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्यां ५४
सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ५५

हि कथमस्याः परिभवोऽभूदित्यत आह रुद्रौजसेति अस्यां गवि त्वया कर्त्रा प्रहृतं तु प्रहारस्तु नपुंसके भावे क्तः रुद्रौजसा ईश्वरसामर्थ्येन न तु त
वेत्यर्थः सप्तम्यधिकरणे चेति सप्तमी ५४ तर्हि किं चिकीर्षितमत आह सेयमिति सेयं गौर्मया निष्क्रीयते प्रत्याह्रियतेऽनेन परगृहीतमिति नि
ष्क्रयः प्रतिशीर्षकं पचादिभ्योऽच्प्रत्ययः स्वदेहार्पणमेव निष्क्रयस्तेन भवतस्त्वत्तः पंचम्यास्तसिल् मोचयितुं न्याय्या न्यायादनपेता युक्तेत्यर्थः -
धर्मपथ्यर्थन्यायादनपेत इति यत्प्रत्ययः एवं सति तव पारणा भोजनं विहता नष्टा न स्यात् मुनेः क्रिया होमादिः सैवार्थः प्रयोजनं स चालुप्तो भवेत् स्व

प्राणव्ययेनापिस्वामिगुरुधनंसंरक्ष्यमितिभावः ५५ अत्रभवानेवप्रमाणमित्याह भवानिति परवान्स्वामितन्त्रोभवान् त्वमपि इदंवक्ष्यमाणं अवैनिवेत्ति भवता-
अनुभूयतएवेत्यर्थः शेषेप्रथमइतिमध्यमपुरुषः कथमित्याह हियस्माद्धेतोः हिहेताववधारणइत्यमरः तवदेवदारौविषये महान्यत्नः महतायत्नेनरक्ष्यतइत्यर्थः-
इदं शब्दोक्तमर्थंदर्शयति स्थातुमिति रक्ष्यंवस्तु विनाश्यविनाशंगमयित्वा स्वयमक्षतेनाव्रणेन नियक्तुं मेतिशेषः नियोक्तुः स्वामिनोऽग्रेस्थातुंनहि-
शक्यं ५६ सर्वथाचेतदपरिहार्यमित्याह किमिति किमपिकिंवा अहंतवाहिंस्यः अवध्योमतश्चेत् तर्हिमेयशः शरीरे यशएवशरीरंतस्मिन्दयालुः

भवानपीदंपरवानवैतिमहान्हियत्नस्तवदेवदारौ स्थातुंनियोक्तुर्नहिशक्यमग्रेविनाश्यरक्ष्यंस्वयमक्षतेन ५६ किमप्यहिं-
स्यस्तवचेन्मतोऽहंयशःशरीरेभवमेदयालुः एकांतविध्वंसिषुमद्विधानांपिंडेष्वनास्थाखलुभौतिकेषु ५७ संबंधमाभा
षणपूर्वमाहुर्वृत्तःसनौसंगतयोर्वनांते तद्भूतनाथानुगनार्हसित्वंसंबंधिनोमेप्रणयंविहंतुं ५८.

र्भव ननुमुख्यमुपेक्ष्यामुख्यशरीरेकोभिनिवेशः अतआह एकांतेति मद्विधानामादृशानांविवेकिनां एकांतविध्वंसिषु अवश्यंविनाशिषु भौतिकेषुपृथिव्या-
दिभूतविकारेषुपिंडेषु अनास्था अनपेक्षाखलु आस्थात्वालंबनास्थानयत्नापेक्षासुकथ्यतइतिविश्वः ५७ सौहार्दी दृढमनुसरणीयोस्मीत्याह संबं
धमिति संबंधः सख्यं आभाषणमालापः पूर्वंकारणंयस्य तमाहुः स्यादाभाषणमालापइत्यमरः सचाकूसंबंधोवनांतेसंगतयोः नौआवयोः इ-
त्तोजातः ततस्ततः हेभूतनाथानुग शिवानुचर एतेनत्वन्महत्त्वंसूचितं अतएव संबंधिनोमित्रस्यमे प्रणयंयाञ्चां प्रणयस्त्वभिविश्रंभयाञ्चाप्रेमाण

इत्यमरः विहंतुंनार्हसि ५८ तथेति तथेतियथात्वंवदसि तथाहंकरिष्यामीतिगामुक्तवतेवाचंवदते हरये सिंहाय कपौसिंहेसुवर्णेचवर्णेविष्णौहरिंविदु रिति शाश्वतः सद्यस्तत्क्षणे प्रतिष्टंभान्निबंधाद्विमुक्तबाहुः सदिलीपः न्यस्तशस्त्रः सन् त्यक्तायुधः सन् स्वदेहमामिषस्यपललस्य पललंक्रव्यमामिष मित्यमरः पिंडकवलमिव उपानयत् समर्पितवान् एतेननिर्ममत्वमुक्तं ५९ तस्मिन्निति तस्मिन्क्षणे उग्रंसिंहनिपातं पतनं उत्पश्यतः उत्प्रेक्षमाणस्य तर्कयतोऽवाङ्मुखस्याधोमुखस्य प्रजानांपालयितुः राज्ञः उपरिष्टात् उपर्युपरिष्टादितिनिपातः विद्याधराणां देवविशेषाणां हस्तान्मुक्तापुष्पवृ-

तथेतिगामुक्तवतेदिलीपःसद्यःप्रतिष्टंभविमुक्तबाहुः सन्यस्तशस्त्रोहरयेस्वदेहमुपानयत्पिंडमिवामिषस्य ५९ तस्मिन् क्षणेपालयितुःप्रजानामुत्पश्यतःसिंहनिपातमुग्रं अवाङ्मुखस्योपरिपुष्पवृष्टिःपपातविद्याधरहस्तमुक्ता ६० उत्तिष्ठवत्से त्यमृतायमानंवचोनिशम्योत्थितमुत्थितःसन् ददर्शराजाजननीमिवस्वांगामग्रतःप्रस्रविणींनसिंहं ६१ तंविस्मितंधेनु रुवाचसाधोमायांमयोद्भाव्यपरीक्षितोऽसि ऋषिप्रभावान्मयिनांतकोपिप्रभुःप्रहर्तुंकिमुतान्यहिंस्राः ६२

ष्टिःपपात ६० उत्तिष्ठेति राजा अमृतमिवाचरतीत्यमृतायमानं उपमानादाचारइतिक्यप् ततः शानच् उत्थितमुत्सन्नं हेवत्सउत्तिष्ठेति वचोनिशम्यश्रु त्वा उत्थितःसन् अस्तेः शतृप्रत्ययः अग्रतोऽग्रे प्रस्नवः क्षीरस्रावोऽस्यास्तीति प्रस्रविणीतांगांस्वांजननीमिवददर्श सिंहंनददर्श ६१ तमिति विस्मित माश्चर्यगतं कर्तरिक्तः तं दिलीपंधेनुरुवाच किमित्यत्राह हेसाधो मयामायामुद्भाव्य कल्पयित्वा परीक्षितोसि ऋषिप्रभावादंतकोपियमोपि मयिप्र १२
हर्तुंनप्रभुः नसमर्थः अन्येहिंस्राः घातुकाः शरारुर्घातुकोहिंस्रइत्यमरः नमिकंपीत्यादिनारप्रत्ययः किमुतसुष्ठुनप्रभवइतियोज्यं बलवत्सुष्ठु

किंसुतस्त्वत्यतीवचनिर्भरइत्यमरः ६२ भक्त्येति हेवत्स गुरौभक्त्यामय्यनुकंपयाच ते तुभ्यंप्रीतास्मिक्रियाग्रहणमपिकर्तव्यमितिचतुर्थी वरंदेवेभ्योवर
णीयमर्थे देवाद्वृतेवरःश्रेष्ठेत्रिषुक्लीबंमनाक्प्रियइत्यमरः वृणीष्व स्वीकुरुष्व तथाहि मांकेवलानांपयसां प्रसूतिंकारणंनावेहि नविद्धि किंतु प्रसन्नांमांका
मान्दोग्ध्रीतिकामदुघा मवेहि दुहःकब्घश्चेतिकप्रत्ययः ६३ ततइति ततस्तदनंतरं मानितार्थी स्वहस्तार्जितोवीरइतिशब्दोयेनसः एतेनास्यदातृत्वं दैन्यराहित्यंचो
क्तं सराजा हस्तौसमानीय संधाय अंजलिंबध्वेत्यर्थः स्रुदक्षिणायांवंशस्यकर्तारं प्रवर्तयितारं अतएव रघुकुलमितिप्रसिद्धं अनंतकीर्तिं स्थिरयशसं तनयंययाचे

भक्त्यागुरौमय्यनुकंपयाचप्रीतास्मितेवत्सवरंवृणीष्व नकेवलानांपयसांप्रसूतिमवेहिमांकामदुघांप्रसन्नां ६३ ततःसमानी
तसमानितार्थीहस्तौस्वहस्तार्जितवीरशब्दः वंशस्यकर्तारमनंतकीर्तिंस्रुदक्षिणायांतनयंययाचे ६४ संतानकामायतथेति
कामंराज्ञेप्रतिश्रुत्यपयस्विनीसा दुग्ध्वापयःपत्रपुटेमदीयंपुत्रोपभुंक्ष्वेतितमादिदेश ६५ वत्सस्यहोमार्थविधेश्चशे
षमृषेरनुज्ञामधिगम्यमातः औधस्यमिच्छामितवोपभोक्तुंषष्ठांशमुर्व्याइवरक्षितायाः ६६

६४ संतानकामायेति सापयस्विनीगौः संतानंकामयतइतिसंतानकामः कर्मण्यण् तस्मैराज्ञे तथेति काम्यतइतिकामोवरः कर्मार्थेघञ् तंप्रतिश्रुत्यप्रतिज्ञाय
हेपुत्र मदीयंपयः पत्रपुटे पत्रनिर्मितपात्रे दुग्ध्वोपभुंक्ष्व पिबेति तमादिदेश आज्ञापितवती ६५ वत्सस्येति हेमातः वत्सस्य वत्सनिपीतस्य शेषं वत्सपीताव
शिष्टमित्यर्थः होमएवार्थस्तस्यविधिरनुष्ठानं तस्यशेषं होमावशिष्टमित्यर्थः तव ऊधसिभवं औधस्यंक्षीरं शरीरावयवाच्चेतियत्प्रत्ययः रक्षितायाः उर्व्याः ष
ष्ठांशं षष्ठभागमिव ऋषेरनुज्ञांअधिगम्य उपभोक्तुंपातुमिच्छामि अभिलषामि ६६ ७ ७ ७ ७ ७ ७ ७

इत्थमिति इत्थंक्षितीशेन विज्ञापिता वसिष्ठधेनुः प्रीततरा पूर्वंशुश्रूषयाप्रीता संप्रत्यनयाविज्ञापनयाप्रीततरा अतिसंतुष्टाबभूव तदन्विता तेनदिलीपेनान्वि-ता हैमवतात् हिमवतः संबंधिनः कुक्षेः गुहायाः सकाशात् अश्रमेणानायासेनाश्रमंप्रत्याय्ययावागता ६७ तस्याइति प्रसन्नेंदुरिवसुखंयस्यसः नृपाणां-गुरुर्दिलीपः प्रहर्षचिन्हैः मुखरागादिभिः अनुमितमभ्यूहितं तस्याः धेनोः प्रसादमनुग्रहं प्रहर्षचिन्हैरेवज्ञातत्वात् पुनरुक्तयेव वाचागुरवेनिवेद्य वि-ज्ञाप्य पश्चात्प्रियायैसुदक्षिणायैशशंस कथयामास कथितस्य कथनंपुनरुक्तिः नचैवेहतदस्ति किंतुचिन्हैः कथितप्रायत्वात्पुनरुक्तयेवस्थितयेत्युत्प्रेक्षा-

इत्थंक्षितीशेनवसिष्ठधेनुर्विज्ञापिताप्रीततराबभूव तदन्विताहैमवताच्चकुक्षेःप्रत्याययावाश्रममश्रमेण ६७ तस्याः
प्रसन्नेंदुमुखःप्रसादंगुरुर्नृपाणांगुरवेनिवेद्य प्रहर्षचिन्हानुमितंप्रियायैशशंसवाचापुनरुक्तयेव ६८ सनंदिनीस्तन्य
मनिंदितात्मासद्वत्सलोवत्सहुतावशेषं पपौवसिष्ठेनकृताभ्यनुज्ञःशुभ्रंयशोमूर्तमिवातितृष्णः ६९ प्रातर्यथोक्त
व्रतपारणांतेप्रास्थानिकंस्वस्त्ययनंप्रयुज्य तौदंपतीस्वांप्रतिराजधानींप्रस्थापयामासवशीवसिष्ठः ७०

६८ सइति अनिंदितात्मा अगर्हितस्वभावः
सत्कृवत्सलः प्रेमवान् वत्सांसाभ्यां कामबलइतिलच्प्रत्ययः सदिलीपःवसिष्ठेनकृताभ्यनुज्ञः कृतानुमतिः सन् वत्सस्य हुतस्यचावशेषं पीतहुतावशिष्टं नंदिन्याः स्तन्यंक्षीरं शुभ्रंमूर्तंपरिच्छिन्नंयशइवातितृष्णःसन्पपौ ६९ प्रातरिति वशीवसिष्ठः प्रातर्यथोक्तस्यव्रतस्य गोसेवारूपस्यांगभूतायापारणात स्याः अंते प्रास्थानिकं प्रस्थानकालेभवं तत्कालोचितमित्यर्थः कालाट्ठञिति ठञ्प्रत्ययः यथाकथंचित्गुणवृत्त्यापि कालेवर्तमानत्वात्प्रत्ययइष्यत इतिवृत्तिकारः स्वस्तिईयते प्राप्यतेऽनेनेतिस्वस्त्ययनं शुभावहमाशीर्वादं प्रयुज्य तौदंपती सुदक्षिणादिलीपौ स्वांराजधानीं पुरींप्रति प्रस्थापयामा- ९३

स ७० प्रदक्षिणीकृत्येति नृपः हुतमभातीतिहुताशो ऽग्निस्तं कर्मण्यण् भर्तुर्मुनेरनंतरं भर्तुःप्रदक्षिणानंतरमित्यर्थः अरुंधतींच धेनुंसवत्सांच प्रदक्षि-
णीकृत्य प्रगतोदक्षिणं प्रदक्षिणं तिष्ठद्गुप्रभृतीनिचेत्यव्ययीभावः ततश्चिप्रत्ययः अप्रदक्षिणं प्रदक्षिणंसंपद्यमानंकृत्वा प्रदक्षिणीकृत्य सद्भिर्मंगलैःप्र-
दक्षिणादिभिर्मंगलाचारैः उदग्रतरप्रभावःसन् प्रतस्थे ७१ श्रोत्रेति धर्मपत्नीसहितः सहिष्णुः व्रतादिदुःखसहनशीलः सनृपः श्रोत्राभिरामध्वनिना श्रो-
त्रयोः कर्णयोः अभिरामोमनोज्ञोध्वनिर्यस्यतेन अनुद्घातः पाषाणादिप्रतिघातरहितःअतएव सुखयतीतिसुखस्तेनरथेन स्वेनपूर्णेन सफलेनमनोरथे-

प्रदक्षिणीकृत्यहुतंहुताशमनंतरंभर्तुररुंधतींच धेनुंसवत्सांचनृपःप्रतस्थेसन्मंगलोदग्रतरप्रभावः ७१ श्रोत्राभिराम
ध्वनिनारथेनसधर्मपत्नीसहितःसहिष्णुः ययावनुद्घातसुखेनमार्गंस्वेनेवपूर्णेनमनोरथेन ७२ तमाहितौत्सु-
क्यमदर्शनेनप्रजाःप्रजार्थव्रतकर्शितांगं नेत्रैःपपुस्तृप्तिमनाप्नुवद्भिर्नवोदयंनाथमिवौषधीनां ७३

नेव मार्गयथो मनोरथपक्षेध्वनिःश्रुतिः अनुद्घातः प्रतिबंधनिवृत्तिः ७२ तमिति अदर्शनेन प्रवासनिमित्तेन आहितौत्सुक्यं जनितदर्शनोत्कंठं प्रजा-
र्थेन संतानार्थेन व्रतेननियमेन कर्शितं अंगंयस्यतंदिलीपं नवोदयं नवाभ्युदयं प्रजाः तृप्तिमनाप्नुवद्भिरतिगृध्नुभिर्नेत्रैरौषधीनांनाथं चंद्रमिवपपुः
अत्यास्थयाददृशुरित्यर्थः चंद्रपक्षे अदर्शनं कलाक्षयनिमित्तं प्रजार्थंलोकहितार्थं व्रतं देवताभ्यःकलादाननियमः तंचसोमंपपुर्देवाः पर्यायेणा-
नुपूर्वशइतिव्यासः उदयं आविर्भावं अन्यत्समानं ७३

पुरंदरेति पुरः पुराण्यसुराणांनगराणि दारयती तिपुरंदरः शक्रः पूःसर्वयोर्दारिसहोरितिखच्प्रत्ययः वाचंयमपुरंदरौचेतिमुमागमः तस्यश्रीरिवश्रीर्यस्य सनृपः पौरैर्नागरिकैरभिनंद्यमानः उत्पताकमुच्छ्रितध्वजं पताकावैजयंतीस्यात्केतनंध्वजमस्त्रियामित्यमरः पुरंप्रविश्य भुजंगेंद्रेण समानसारेतुल्यबले सारोबलेस्थिरांशेचन्याय्येक्लीबंवरेत्रिषित्यमरः भुजे भूयः भूमेर्धुरंआससंज समर्पितवान् ७४ अथेति अथ द्यौः सुरवर्त्म द्यौः स्वर्गसुरवर्त्मनोरितिविश्वः अत्रेर्महर्षेर्नयनात्समुत्थमुत्पन्नं नयनसमुत्थं आतश्चोपसर्गेइतिकप्रत्ययः तज्ज्योतिरिवचंद्रमिवेत्यर्थः सुरसरित्स्यादत्रिनेत्रप्र·

पुरंदरश्रीः पुरमुत्पताकंप्रविश्यपौरैरभिनंद्यमानः भुजेभुजंगेंद्रसमानसारेभूयःसभूमेर्धुरमाससंज ७४ अथनयनसमुत्थंज्योतिरत्रेरिवद्यौःसुरसरिदिवतेजोवन्हिनिष्ठ्यूतमैशं नरपतिकुलभूत्यैगर्भमाधत्तराज्ञीगुरुभिरभिनिविष्टंलोकपालानुभावैः ७५ इतिश्रीरघुवंशेमहाकाव्येकालिदासकृतौनंदिनीप्रसादोनामद्वितीयसर्गः २ समाप्तः

सूतइतिहलायुधः चंद्रस्यात्रिनेत्रोद्भूतत्वमुक्तंहरिवंशे नेत्राभ्यांपरिसुस्रावदशधाद्योतयन्दिशः तंगर्भंदशधाभ्रष्टंदिशोदेव्योदधुस्ततः १ समेत्यधारयामासुर्नचैतास्तदशक्नुवन् सताभ्यःसहसैवाद्यदिग्भ्योगर्भःप्रभान्वितः २ पपात भावयन्लोकान्शीतांशुः सुरभावनइति सुरसरिद्गंगा वन्हिनानिष्ठ्यूतंनिक्षिप्तं ष्ठिवुःशूडनुनासिकेचेतिवकारस्यऊठ् नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाइत्यमरः ऐशंतेजःस्कंदमिव अत्ररामायणं तेगत्वा १४
पर्वतंरामकेवलंधातुमंडितं अग्निंसंयोजयामासुःपुत्रार्थंसर्वदेवताः १ देवकार्यमिदंदेवसमाधत्स्वहुताशन शैलजायांमहातेजोगंगायांतेजउत्सृज २

देवतानांप्रतिज्ञायगंगामभ्येत्यपावकः गर्भधारयवैदेविदेवतानामिदंप्रियं ३ इत्येतद्वचनंश्रुत्वादिव्यरूपमधारयत् ततस्यामहिमंदृष्ट्वासमंतादवकीर्यच ४ समंतत-
स्तदादेवींसमभ्येत्यचपावकः सर्वस्रोतांसिपूर्णानिगंगायांरघुनंदनेति ५ गङ्गीरूद्दक्षिणानरपतेर्दिलीपस्य कुलभूत्यै संततिलक्षणायै गुरुभिर्महद्भिर्लोकपाला-
नामनुभावैस्तेजोभिरभिनिविष्टं अनुप्रविष्टंगर्भमाधत्त दधावित्यर्थः अत्रमनुः अष्टानांलोकपालानांवपुर्धारयतेनृपइति अत्राधत्तेत्यनेनस्त्रीकर्तृकधारणमा-
त्रमुच्यते तथामंत्रेनदृश्यते यथेयंपृथिवीमह्यूत्तानागर्भमादधे एवंतंगर्भमाधेहिदशमेमासिसूतवेइत्याश्वलायनानां सीमंतेस्त्रीव्यापारेधारणशब्दप्र-
योगदर्शनादिति मालिनीवृत्तमेतत् तदुक्तं ननमयययुतेयंमालिनीभोगिलोकैरिति ७५ इतिश्रीपदवाक्यप्रमाणपारावारीणश्रीमहोपाध्यायकोलाचल-
मल्लिनाथसूरिविरचितायांरघुवंशव्याख्यायांसंजीविनीसमाख्यायांद्वितीयः सर्गःसमाप्तः ॥२॥ ॥ हेंपुस्तक पुणें पेठ शनवार गेहुणपुरा येथे रावजी
श्रीधरगोंधळेकर याणीं आपले जगद्धितेच्छुछापरवान्यांत छापून प्रसिद्ध केलें तारीख २८ माहे जुलै सन् १८७१ इ० ५ ५ ५ ५.

पं॰ गणेश प्रसाद शुक्ल लालगंज नागपुर स्त॰ नं॰ १२

 

श्रीगणेशायनमः उपाधिगम्योप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः भवोपियोऽभूदभवः शिवोयंजगत्यपायादपिनः सपायात्
१ राज्ञीगर्भमाधत्तेत्युक्तम् संप्रतिगर्भलक्षणानिवर्णयितुंप्रस्तौति अथेति अथगर्भधारणानंतरं सुदक्षिणा उपस्थितोदयं मासकालं भर्तुर्दि-
लीपस्यईप्सितंमनोरथं भावेक्तः पुनः सखीजनस्योद्वीक्षणानां दृष्टीनां कौमुदीवत्सुखं चंद्रिकाप्रादुर्भावः यद्वा कौमुदी दीपोत्सवतिथिः तदुक्तंभविष्यो
त्तरे कौमुदंतेजनायस्यांतेनासौकौमुदीमतेति तस्यासुखंप्रारंभः अतएवकेचित्कौमुदीमुखमितिपाठंपठंति इक्ष्वाकुकुलस्यसततेरविच्छेदस्यनिदा
नंमूलकारणं निदानंत्वादिकारणमित्यमरः एवंविधंदोहदलक्षणं गर्भचिन्हं वक्ष्यमाणंदधौ स्वत्हृदयेनगर्भत्हृदयेनच द्विहृदयागर्भिणी यथाहवा

**अथेप्सितंभर्तुरुपस्थितोदयंसखीजनोद्वीक्षणकौमुदीमुखम् निदानमिक्ष्वाकुकुलस्यसंततेः सुदक्षिणादोहदलक्ष**
**णंदधौ १ शरीरसादादसमग्रभूषणामुखेनसालक्ष्यतलोध्रपांडुना तनुप्रकाशेनविचेयतारकाप्रभातकल्पाशशिने**
**वशर्वरी २**

ग्भट्टः मातृजंत्वस्यहृदयेमातुश्चस्वहृदयेनतत् संबद्धंतेनगर्भिण्यानेष्टंश्रद्धाविधारणमिति तत्संबंधित्वाद्गर्भदौर्हृदमित्यु
च्यते साचतद्योगाद्द्वौहृदिनीति तदुक्तंसंग्रहे द्विहृदयानारी दौर्हृदिनीमाचक्षतइति अत्रदोहदलक्षणस्येप्सितत्वेन कौमुदीमुखत्वेनच निरूपणा १
द्रूपकालंकारः अस्मिन्सर्गेवंशस्थंवृत्तम् जतौतुवंशस्थमुदीरितंजरौ १ संप्रतिक्षामतारव्यंगर्भलक्षणंवर्णयति शरीरेति शरीरस्यसादात् कार्श्या

दसमग्रभूषणा परिमिताभरणा लोध्रपुष्पवत्पांडुना मुखेनोपलक्षिता सा सुदक्षिणा विचेयाम्नग्या स्तारकायस्यां सा तथोक्ता विरलनक्षत्रेत्यर्थः तनुप्रकाशेनाल्पकांतिना शशिनोपलक्षिता संईषदसमाप्त प्रभाता प्रभानकस्या प्रभातादीषन्यूना तसिलादिष्वाकृत्व स्रुच इति प्रभानशब्दस्य पुंवद्भावः शर्वरी रात्रिरिवालक्ष्यत शरीरसादादि गर्भलक्षणमाह वाग्भट्टः क्षामता गरिमाकुक्षेर्मूर्च्छा छर्दिररोचनम् जृंभा प्रसेकः सदनं रोमराज्याः प्रकाशनमिति २ तदिति क्षितीश्वरो रहसि मृदा सुरभि सुगंधितस्या आननं तदाननं सुदक्षिणासुखं उपाघ्रायतृप्तिं नाययौ कः कथमिव शुचिव्यपा

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ३ दिवं मरुत्वानिव भोक्ष्यते महीं दिगंतविश्रांतरथो हि तत्सुतः अतोभिलाषे प्रथमं तथाविधे मनो बबंधान्यरसान्विलंघ्य सा ४

ये ग्रीष्मावसाने शुचिः शुक्रेनुपहते शृंगाराषाढयोः सिते ग्रीष्मे हुतवहेपि स्यादुपधौ शुक्रमंत्रिणीति विश्वः पयोमुचां मेघानां पृषतैर्बिंदुभिः पृषंति बिंदुपृषताइत्यमरः सिक्तमुक्षितं वनराज्याः पल्वलं वेशांतः पल्वलं चाल्पसर इत्यमरः उपाघ्राय करीगज इव अत्र करी वनराजिपल्वलानां कांतकामिनीवदनसमाधिरनुसंधेयः गर्भिणीनां मृद्भक्षणं लोके प्रसिद्धमेव एतेन दोहदाख्यं गर्भलक्षणमुच्यते तदाननं सेवितमृत्ति कालवं नृपः समाघ्रायेति पाठे सेवितो मृत्तिकायाः अंशो येन तादृशं मुखमित्यर्थः ३ दोहदलक्षणे मृद्भक्षणे हेत्वंतरमुत्प्रेक्षते दिवमिति हि यस्माद्दिगंतविश्रांतरथश्चक्र-

वर्णी तस्याः स्रुतस्तत्स्नुतः मत्स्रुतइति पाठः मरुत्वानिंद्रः इंद्रो मरुत्वान्मघवेत्यमरः दिवं स्वर्गमिव मही भोक्ष्यते भुजोऽनवन इत्यात्मनेपदम् अतः
प्रथमं सासुदक्षिणा तस्या विधे भूविकारे मृद्रूपं अभिलष्यत इत्यभिलाषो भोग्यवस्तु तस्मिन् कर्मणि घञ् प्रत्ययः रस्यंते स्वाद्यंते इति रसा भोग्यार्थाः अ-
न्यं चनेरसाश्च तान् विलंघ्य विहाय मनोबवं धनिदधौ दोहदहेतुकस्य मृद्भक्षणस्य पुत्रभूभोगसूचनार्थत्वमुत्प्रेक्षितं ४ नेति मगधस्य राज्ञोऽपत्यं स्त्री
मागधी सुदक्षिणा दृञ्मगधकलिंगसूरमसादणित्यणु न्हिया किंचित्किमपीप्सितमिष्टं मेमत्यं न शंसति नाचष्टे केषु वस्तुषु स्पृहावतीत्यनु वेलमनु

नमेन्हियाशंसति किंचिदीप्सितं स्पृहावनीवस्तुषु केषु मागधी इतिस्मपृच्छत्यनुवेलमादृतः प्रियासखी रुत्तरकोस
लेश्वरः ५ उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् नहीष्टमस्यास्त्रिदिवेऽपि भूपतेरभूदनासाद्यम-
धिज्यधन्वनः ६ क्षणमाहृत आहृतवान् कर्तरिक्तः आहृतौ सादरार्चिताविल्यमरः प्रियायाः सखीः सहचरीः उत्तरकोसलेश्व
रो दिलीपः पृच्छतिस्म पप्रच्छ लट्स्मेइति भूतार्थे लट् सखीनां विश्रंभभूमित्वादितिभावः ५ उपेत्येति दोहदं गर्भिणी मनोरथः दोहदं दौर्हृदं श्र-
द्धा लालसं च समं स्मृतमिति हलायुधः सा सुदक्षिणा दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावतामुपेत्य प्राप्य यद्वस्तु वव्रे आच
कांक्ष तदाहृतमानीतम् भर्त्रेति शेषः अपश्यदेव अलभतेत्यर्थः कुतो हि यस्मादस्याः सुदक्षिणाया इष्टं वस्तु त्रिदिवेऽपि स्वर्गेऽपि भूपतेरनासाद्य-

मनवाप्यंनाभूत् किं याञ्चयानेत्याह अधिज्यधन्वनइति नहिवीरपत्नीनामलभ्यंनामकिंचिदस्तीतिभावः अत्र वाग्भट्टः पादशोफाविदाहोन्वेभन्द्राच्चविवि-
धात्मिकेति एतच्च पत्नीमनोरथपूरणाकरणेहृष्टदोषसंभावान्नतु राज्ञः स्त्रीलौल्यात् तदुक्तम् देयमप्यहितंतस्यैहितोपहितम ल्पकम् श्रद्धावि-
घाते गर्भस्य विकृतिश्च्युतिरेववा अन्यच्चदोहदस्याप्रदानेनगर्भोदोषमवाप्नुयादिति ६ क्रमेणेति सास्तुदक्षिणा क्रमेणदोहदव्यथांचनिस्तीर्यप्र-
चीयमानावयवापुष्यमाणावयवासती पुराणपत्राणांमपगमान्नाशादनंतरंसम्पन्नाः संजाताः प्रत्यग्रत्वात् मनोज्ञाः पल्लवाः यस्याः सालतेवर

क्रमेणनिस्तीर्यचदोहदव्यथांप्रचीयमानांवयवाररराजसा पुराणपत्रापगमादनंतरंलतेवसन्नन्ध्रमनोज्ञपल्लवा ७ दिनेषु
गच्छत्सुनितांतपीवरंतदीयमानीलमुखंस्तनद्वयम् तिरश्चकारभ्रमरावलीढयोः सुजातयोःपंकजकोशयोःश्रियम् ८ नि
धानगर्भामिवसागरांबरांशमीमिवाभ्यंतरलीनपावकाम् नदीमिवांतःसलिलांसरस्वतींनृपःससत्वांमहिषीममन्यत ९

राज ७ लक्षणांतरंवर्णयति दिनेष्विति दिनेषुदोहददिवसेषुगच्छत्सुसत्सु नितांतपीवरमतिस्थूलं आसमंतान्नीलेमुखेचूचुकेयस्यतत्
तदीयंस्तनद्वयम् भ्रमरैरवलीढयोरभिव्याप्तयोः सुजातयोः सुंदरयोः पंकजकोशयोःपद्ममुकुलयोः श्रियंशोभांतिरश्चकार अत्रवाभट्टः
अम्लेष्टतास्तनौपीनौसस्तन्यौकृष्णचूचुकाविति ८ निधानेति नृपःससत्वां आपन्नसत्वांगर्भिणीमित्यर्थः आपन्नसत्वास्याद्गुर्विण्यंत

रघु॰टी॰ ३ वैलीच गर्भिणीत्यमरः महिषीमिति वाननिधार्गर्भं यस्यास्तां सागरांबरां समुद्रवसनां भूमिमित्यर्थः भूर्वधात्री रत्नगर्भा विपुला सागरांबरेत्यमरः तामिव अ स॰ ३
भ्यंतरे लीनः पावको यस्यास्तां शमीमिव शमीतरौ वन्हिरस्तीत्यत्र लिंगं शमीगर्भादग्निं मंथतीति अंतःसलिलामंतर्गतजलां सरस्वतीं नदीमिव अभ-
न्यन एतेन गर्भस्य भाग्यवत्त्वतेजस्वित्वपावनत्वानि विवक्षितानि ९ प्रियेति धीरः स राजा प्रियानुरागस्य स्नेहस्य मनसः समुन्नते रौदार्यस्य च भुजब
ले नार्जितानां करेण वार्जितानां न तु वाणिज्यादिना दिगंतेषु संपदां धृतेः पुत्रो मे भविष्यतीति संतोषस्य च धृतिर्योगांतरे धैर्ये धारणा रतितुष्टिष्विति विश्वः

प्रियानुरागस्य मनःसमुन्नतेर्भुजार्जितानां च दिगंतसंपदाम् यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यध
त्त सः १० सुरेंद्रमात्राश्रितगर्भगौरवात्प्रयत्नमुक्तासनया गृहागतः तयोपचारांजलिखिन्नहस्तया ननंद पारिप्लवनेत्रया
नृपः ११

सदृशी रघुरूपाः पुमान् सूयतेऽनेनेति पुंसवनं तदादिर्यासां ताः क्रियाः यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान् आदिशब्दे
न अनवलोभन सीमंतोन्नयने गृह्येते अत्र मासि द्वितीये वा पुंसवनं यदहः पुंसा नक्षत्रेण चंद्रमा युक्तः स्यादिति पारस्करः चतुर्थेऽनवलोभनमित्याश्व
लायनः षष्ठेऽष्टमे वा सीमंत इति याज्ञवल्क्यः १० सुरेंद्रमात्रेति गृहागतो नृपः सुरेंद्राणां लोकपालानां मात्राभिरंशैराश्रितस्यानुप्रविष्टस्य गर्- ३
भस्य गौरवात् प्रयत्नेन मुक्तासनया आसनादुत्थितयेत्यर्थः उपचारस्यांजलावंजलिकरणे खिन्नहस्तया पारिप्लवनेत्रया तरलाक्ष्या चंचल

तरलं चैव पारिपूवपरिपूवे इत्यमरः तया सुदक्षिणया ननंद स्फुरैद्र मात्राभिते त्यत्र मनुः अष्टाभिश्च सुरेंद्राणां मात्राभिर्निर्मितोनृप इति ११ कुमा
रेति अथ कुमारभृत्या बालचिकित्सा संज्ञायां समजनिषदेत्यादिना क्यप् तस्यां कुशलैः कृतिभिः कृती कुशल इत्यपीत्यमरः आप्तैर्हितैर्भिषग्भि
र्वैद्यैः भिषग्वैद्यौ चिकित्सकावित्यमरः गर्भस्य भर्मणि पोषणे भर्म हेमभृतिर्भ्रमहति शाश्वतः भृञो मनिन् प्रत्ययः अनुष्ठिते कृते सति काले दश
मे मासि अन्यत्र ग्रीष्मावसाने प्रसवस्य गर्भमोचनस्योन्मुखीं आसन्नप्रसवामित्यर्थः स्यादुत्पादः फले पुष्पे प्रसवो गर्भमोचन इत्यमरः प्रियां भार्या

कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रिता
मिव १२ ग्रहैस्ततः पंचभिरुच्चसंश्रयैरसूर्यगैःसूचितभाग्यसंपदम् अभ्राण्यस्याः संजातानि अभ्रिता तदस्य सं
जातं तारकादिभ्य इतजिती तच् प्रत्ययः तां दिवमिव पतिर्भर्त्ता प्रतीतो दृष्टः सन् ख्याते दृष्टे प्रतीत इत्यमरः ददर्श दृष्टवान् गर्भवेश्मनीति पाठे
ऽनुष्ठित इत्यत्राधिष्ठित इति ज्ञेयम् गर्भभर्मणीति पाठे गर्भाधान प्रतीता वौचित्य भंगः १२ ग्रहैरिति ततः शच्या इंद्राण्या समा पुलोमजा शची इंद्राणी त्य
मरः सा सुदक्षिणा समये प्रसूति काले सति दशमे मासीत्यर्थः दशमे मासि जायते इति श्रुतेः उच्चसंश्रयैरुच्चसंस्थैस्तुंगस्थानगैः असूर्यगैरनस्त
मितैः कैश्चिद्यथासंभवं पंचभिर्ग्रहैः सूचिता भाग्यसंपद्यस्य तं पुत्रं श्रीणि प्रभावमंत्रोत्साहात्मकानि साधना न्युत्साहकानि पस्याः सात्रिसाधनाश

क्तिः शक्तयस्तिस्रः प्रभावोत्साहमंत्रजा इत्यमरः अक्षयमर्थमिव असूत षूङ् प्राणिगर्भविमोचन इत्यदादिषु पठ्यते तस्मान्द्धातोः कर्तरि लङ् अत्रेदमनुसंधेयम् अजवृषभमृगांगनाकुलीरा झषवणिजौ च दिवाकरादितुंगाः दशशिखिमनुयुक्तिथींद्रियांशै स्त्रिनवकविंशतिभिश्च तेऽस्त नीचा इति सूर्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः श्लोकोक्तक्रमविशिष्टाः उच्चस्थानानीति स्वस्वतुंगापेक्षया सप्तमस्थानानि नीचा नीति तन्नोच्चेष्वपि दशमादयो राशित्रिंशांशा यथाक्रममुच्चेषु परमनीचा इति जानकश्लोकार्थः अत्रांशास्त्रिंशोभागः यथाह नारदः त्रिंशद्भागास्स

असूत पुत्रं समये शची सम त्रिसाधना शक्तिरिवार्थमक्षयम् १३ दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविर ग्निराददे बभूव सर्वं शुभशंसि तत्क्षणे भवो हि लोकाभ्युदयाय तादृशाम् १४

कं लग्नमिति सूर्यमत्या सप्तग्रहाणामस्तम योनाम तदुक्तं लघुजातके रविणास्तमयो योगो वियोगस्तूदयो भवेदिति तेच स्वोच्चस्थाः फलंति नास्तगाः नापि नीचगाः तदुक्तं राजमृगांके स्वो च्चे पूर्णं स्वर्क्षगेऽर्द्धं सुहृदृहे पादं द्विड्भे स्वल्पं शुभः खेचरेन्द्रः नीचस्थायी नास्तगो वा न किंचित्पादं न्यूनं स्वत्रिकोणे ददातीति तदिदमाह कविः उच्चसंश्रयै रसूर्यगैरितिच एवं सति यस्य जन्मकाले पंचप्रभृतयो ग्रहाः स्वोच्चस्थाः स देवतुल्यो भवति तदुक्तं वृद्धस्थीये स्फुरिवनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजा नः एकद्वित्रिचतुर्भिर्जायंतेऽतः परं दिव्या इति तदिदमाह पंचभिरिति १३ दिश इति तत्क्षणं तस्मिन्क्षणे कालाध्वनोरत्यंतसंयोगे द्वितीया दिशः प्रसे ४

दुःप्रसन्ना बभूवुः मरुतो वाताः सुखा मनोहराः ववुः अग्निः प्रदक्षिणार्चिः सन् हुतं हविरादद्दे स्वीचकार इत्थं सर्वं शुभशंसि शुभसूचकं बभूव- हि यतः तादृशां रघुप्रकाराणां भवो जन्म लोकाभ्युदयाय भवतीति शेषः ततो देवा अपि संतुष्टा इत्यर्थः १४ अरिष्टेति अरिष्टे सूतिकागृहे शय्यां तल्पं अरिष्टं सूतिकागृहमित्यमरः परितः सर्वतः अभितः परतः समयानिकषाहा प्रतियोगेपीति द्वितीया विसारिणा विस्तरणशीलेन सुजन्मनः शोभनोत्पत्तेः जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव इत्यमरः तस्य शिशोर्निजेन नैसर्गिकेण तेजसा सहसाहतत्विषः क्षीणकांतयः निशीथे दीपाः अ-

अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा निशीथदीपाः सहसाहतत्विषो बभूवुरालेख्यसमर्पिता इव १५
जनाय शुद्धांतचराय शंसते कुमारजन्मामृतसंमिताक्षरम् अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे १६
निवातपद्मस्तिमितेन चक्षुषा नृपस्य कांतं पिबतः सुताननम्

र्द्धरात्रनिशीथौ द्वावित्यमरः आलेख्ये समर्पिताः चित्रार्पिता इव बभूवुः निशीथशब्दो दीपानां प्रभाधिक्यसंभावनार्थः १५ जनायेति भूपतेर्दिलीपस्य अमृतसंमिताक्षरममृतसमानाक्षरं सरूपसमितसंमिता इत्याहदंडी कुमारजन्म पुत्रोत्पत्तिं शंसते कथयते शुद्धांतचराय अंतःपुरचारिणे जनाय त्रयमेवादेयमासीत् किं तत् शशिप्रभं छत्रं उभे चामरे च छत्रादीनां राज्ञः प्रधानांगत्वादिति भावः १६ निवातेति निवातो निर्वातदेशः निवातावाश्रयावातावित्यमरः तत्र यत्पद्मं तद्वत् स्तिमितेन निश्चलेन चक्षुषा ने

त्रेणकांतं सुंदरं स्मितानन पुत्रमुखं पिबनः तृष्णायापश्यतो नृपस्य गुरुरुत्कटः प्रहर्षः कर्ता इंदुदर्शनात् गुरुर्महोदधेः पूरोजलौघइव आत्मनि श
रीरे न प्रबभूव स्थातुं न शशाक अंतर्नमातिस्मेति यावत् न त्यत्या धोरधिकं मीयन इति भावः यद्वाहर्ष आत्मनि स्वास्मिन्विषये नप्रबभूव आत्मा
नं नियंतुं न शशाक किंतु बहिर्निर्जगामेत्यर्थः १७ सइति सदिलीपसूनुः तपस्विना पुरोधसा पुरोहितेन पुरोधास्तु पुरोहित इत्यमरः वसिष्ठेन तप
स्वित्वात्तदनुष्ठितं कर्म सवीर्यंस्यादिति भावः तपोवनादेत्यागत्य अखिले समग्रे जातकर्मणि जातस्य शिशोः कर्मणि कर्तव्य संस्कार विशेषे कृते स

महोदधेः पूरइवेंदुदर्शनात् गुरुः प्रहर्षः प्रबभूव नात्मनि १७ सजातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कारइवाधिकं बभौ १८ सुखश्रवा मंगलतूर्यनिस्वनाः प्रमोदनृत्यैः सहवारयोषिताम्
न केवलं सद्मनि मागधीपतेः पथिव्यजृंभंत दिवौकसामपि १९ ति प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य सतथोक्तः आकरोद्भवः
खनिप्रभवः खनिः स्त्रियामाकरः स्यादित्यमरः मणिरिवाधिकं बभौ वसिष्ठमंत्र प्रभावात्तेजिष्ठो ऽभूदित्यर्थः अत्र मनुः प्राङ्नाभिवर्द्धनात्पुंसो जात
कर्म विधीयत इति सुखश्रवा इति सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः श्रुतिसुखा इत्यर्थः मंगलतूर्यनिस्वनाः मंगलवाद्यध्वनयः वारयो ५
षितां वेश्यानां वारस्त्रीगणिका वेश्या रूपाजीवेत्यमरः प्रमोदनृत्यैर्हर्षनर्तनैः सह मागधीपतेः दिलीपस्य सद्मनि केवलं गृह एव नव्यजृंभंत ना

वर्न्द्धत किंतु चौरोको येषां तेदिवौ कसः पृषोदरादित्वात्साधुः देवास्तेषां पथ्याकाशेपि व्यजृंभंत तस्यदेवां शत्वाद्देवोपकारित्वाच्चदेवदुंदुभयोपिने दु- रिति भावः १९ नेनिरक्षितुः सम्यक् पालनशीलस्य तृन्निति तृन्प्रत्ययः तस्यदिलीपस्य अतएव चोराद्यभावात्सं यतो बन्द्धो न बभूवना भूत् किंतेना न आह विसर्जयेदिति सुतजन्मनाहर्षितस्तोषितः सन् यंबन्द्धं विसर्जयेद्विमोचयेत् किंतुः सराजा तदापितृणां ऋणाभिधानाद्बंधनात् केवलमे- कं यथा तथा स्वयमेव एकएवेत्यर्थः केवलः कृत्स्न एकश्च केवलश्चावधारण इति शाश्वतः मुमुचे कर्मकर्तरिलिट् स्वयमेव मुक्त इत्यर्थः अस्मिन्नर्थे ए-

नसंयतस्तस्य बभूवरक्षितुर्विमोचयेद्यंसुतजन्महर्षितः ऋणाभिधानात्स्वयमेवकेवलंतदापितृणांमुमुचेसबंधनात् २०
श्रुतस्ययायादयमंतमर्भकस्तथापरेषांयुधिचेतिपार्थिवः अवेक्ष्यधातोर्गमनार्थमर्थविच्चकारनाम्नारघुमात्मसंभवम् २१

षवा अनृणोयः पुत्रीति श्रुतिः प्रमाणम् २० श्रुतस्येति अर्थविच्छब्दार्थज्ञः पार्थिवः पृथिवीश्वरो दिलीपः अयमर्भको बालकः श्रुतस्य शास्त्रस्यांतं पारं यायात् तथा युधि परेषां शत्रूणां अंतं पारंच यायात् शक्नुयादित्यर्थः शकिलिङ्चेति शक्यार्थे लिङ् इति हेतोर्धातोः अगि रघि लघि गत्यर्था इति ल- घिधातोर्गमनाख्यमर्थं अवेक्ष्यालोच्य आत्मसंभवंपुत्रं नाम्नारघुंचकार लघिवत्योर्नलोपश्चेत्युप्रत्यये पालमूललघुवलांगुलीनां वलोरस्यमा- पद्यत रतिवैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम् अत्र शंखः अशौचेति व्यतिक्रांते नामकर्म विधीयत इति २१ ५ ५ ५

पितुरिति सरघुः समग्रसंपदः पूर्णलक्ष्मीकस्य पितुर्दिलीपस्य प्रयत्नात् शुभैर्मनोहरैः शरीरावयवैः हरिदश्वदीधितेः सूर्यस्यरश्मेः भास्वद्विवस्वत्स
साश्वहरिदश्वोष्णरश्मर इत्यमरः अनुप्रवेशाद्बालचंद्रमा इव दिने दिने प्रतिदिनं नित्यवीप्सयोरिति द्विर्वचनम् वृद्धिं पुपोष अत्र संहितावचनम् स-
लिलमये शशिनिरवेर्दीधितयो मूर्च्छितास्तमो नैशं क्षपयंति दर्पणोदरनिहिताइव मंदिरस्यांतरिति २२ उमेति उमा वृषांकौ पार्वती वृषध्वजौ शरजन्म
ना कार्त्तिकेयेन कार्त्तिकेयो महासेनः शरजन्मा षडाननः इत्यमरः यथाननंदतुः शचीपुरंदरौ इंद्राणींद्रौ पुलोमजा शचींद्राणीत्यमरः जयंतेन पाकशास

पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने पुपोषवृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचंद्रमाः २२
उमावृषांकौ शरजन्मना यथा यथा जयंतेन शचीपुरंदरौ तथा नृपः सा च सुतेन मागधी ननंदतुस्तत्सदृशेन तत्समौ २३
रथांगनाम्नोरिव भावबंधनं बभूव यत्प्रेम परस्पराश्रयं विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि नव्यहीयत २४

निना जयंतः पाकशासनिरित्यमरः यथाननंदतुः तथा तत्समौ ताभ्यां उमावृषांकाभ्यां शचीपुरंदराभ्यां च समौ सा मागधी नृपश्च तत्सदृशेन-
ताभ्यां कुमारजयंताभ्यां सदृशेन सुतेन रघुणा ननंदतुः मागधी व्याख्याता २३ रथांगनाम्नोरिति रथांगनाम्नी च रथांगनामा च रथांगनामा-
नौ चक्रवाकौ पुमान्स्त्रियेत्येकशेषः तयोरिव तयोर्दंपत्योः भावबंधनं हृदयाकर्षकं परस्पराश्रयम् अन्योन्यविषयम् यत्प्रेम बभूव तदेके- ६

नकेवलेन ताभ्यामन्येनया एकेमुख्यान्यकेवलाइत्यमरः एकोऽन्यार्थेप्रधानेच प्रथमेकेवलेतथा साधारणे समानेऽल्पे संख्यायांच प्रयुज्यत इतिवि-
श्वः सुतेनविभक्तमपि सुतविभागमपि परस्परस्योपरिनव्यहीयत हीनंनबभूव किंतु ववृधे कर्मकर्तरिलिट् अकृत्रिमत्वात्स्वयमेवोपचितमि-
त्यर्थः यदेकाधारद्वयंवस्तु तदाधारद्वये विभज्यमानंहीयते अत्रतु तयोर्विषये प्रागेकविषयं प्रमसप्रसद्वितीयविषयलाभेपिनाहीयत प्रत्युतोप-
चितमेवाभूदितिभावः २४ उवाचेति सोर्भकः शिशुः पोतःपाकोर्भकोडिंभः पृथुकःशावकःशिशुरित्यमरः धात्र्या उपमात्रा धात्रीजनन्यामलकी

उवाच धात्र्याप्रथमोदितंवचो ययौतदीयामवलंब्यचांगुलिम् अभूच्चनम्रःप्रणिपातशिक्षयापितुर्मुदंतेनततान
सोर्भकः २५ तमंकमारोप्यशरीरयोगजैःसुखैर्निषिंचंतमिवामृतंत्वचि उपांतसंमीलितलोचनोनृपश्चिरात्सुत-
स्पर्शरसज्ञतांययौ २६

वत्सुमत्कपमातृष्विति विश्वः प्रथममुदितमुपदिष्टंवचउवाच तदीयामंगुलिमवलंब्य ययौच प्र-
णिपातस्य शिक्षया उपदेशेन नम्रोभूच्चेतियत् तेनपितुर्मुदंततान २५ तमिति शरीरयोगजैः शरीरसंबंधेनजातैः सुखैः त्वचित्वगिंद्रिये अ-
मृतं निषिंचंतं वर्षंतमिवतं पुत्रमंकमारोप्य मुदाविर्भावात् उपांतयोः संमीलितःलोचनःसन् नृपः चिरात्सुतस्पर्शरसज्ञतां ययौ रसःस्वादुः २६
७, ७, ७, ७, ७, ५

अमंस्तेति स्थितेरभेत्ता मर्यादापालकः सनृपः परार्ध्यजन्मना उत्कृष्टजन्मना अनेन रघुणा अन्वयं वंशं प्रजानांपतिः ब्रह्मा गुणाः सत्वादयः गु
णाः सत्वंरजस्तमइत्यमरः तेषु अग्र्येण मुख्येन सत्वेन वर्तते व्याप्रियतइति गुणाग्र्यवर्ती तेन स्वस्य मूर्तिभेदेन अवतारविशेषेण विष्णुना
आत्मनः सर्गं सृष्टिमिव स्थितिमंतं प्रतिष्ठावंतं अमंस्तमन्यतेस्म मन्यते रनुदात्तत्वादिट् प्रतिषेधः अत्रोपमानोपमेययोरितरेतर विशेष-
णानीत रेतरत्रयोज्यानि तत्ररघुपक्षेगुणाः विद्याविनयादयः गुणोऽप्रधाने रूपादौ मौर्व्यां सूदेवृकोदरे रत्नेभे सत्वादिसंध्यादिविद्यादिहरीत

अमंस्तचानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमंतमन्वयम् स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिःप्रजानामिव
सर्गमात्मनः २७ सवृत्तचूडश्चलकाकपक्षकैरमात्यपुत्रैःसवयोभिरन्वितः लिपेर्यथावद्ग्रहणेनवाङ्मयंनदी
मुखेनेवसमुद्रमाविशत् २८ दिधिषितिविश्वः शेषंसुगमम् २७ सइति चूडाकर्मद्विजातीनां सर्वेषामेवधर्मतः प्रथमे-
ब्दे तृतीयेवाकर्तव्यं श्रुतिचोदनादितिमनुस्मरणात् तृतीये वर्षे कृतचूडः .निष्पन्नचूडाकर्मासन् डलयोरभेदः सरघुः प्राप्तेतु पंचमेवर्षे विद्या ७
रंभंच कारयेदिति वचनात्पंचमे वर्षेचलकाकपक्षकैश्चंचल शिखंडकैः बालानांतु शिखाप्रोक्ता काकपक्षःशिखंडक इतिहलायुधः सवयो-
भिः स्निग्धैः स्निग्धोवयस्यः सवया इत्यमरः अमात्यपुत्रैरन्वितःसन् लिपेः पंचाशद्वर्णात्मिकायामातृकायाः यथावद्ग्रहणेन सम्य-

ग्बोधनो पायभूतेन वाङ्मयं शब्दजातं नद्यामुखं द्वारं मुखं तु वदनं मुख्यारंभे द्वाराभ्युपाययोरि ति यादवः तेन कश्चिन्म कराद्िः समुद्रमिव आ
विशत् प्रविष्टः ज्ञातवानित्यर्थः २८ अथेति गर्भाष्टमे प्रकुर्वीत ब्राम्हणस्योपना यनं गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशइति मनुस्मरणात् अ-
थगर्भैकादशेब्दे विधिवदुपनीतं कृतो पवीतं गुरुप्रियमेनं रघुं विपश्चितो विद्वांसो गुरवो विनिन्युः शिक्षितवंतः तेगुरवः अस्मिन्नर्भके रघौ अवंध्य
यत्नाः सफल प्रयत्नाश्च बभूवुः नथाहि क्रियाशिक्षा क्रियातु निष्कृतौ विक्षाचिकि त्सो पायकर्मस्विति यादवः वस्तुनि पात्रभूते उपहिता प्रयुक्ता प्र-

अथोपनीतंविधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् अवंध्य यत्नाश्च बभूवुरर्भके क्रिया हि वस्तू पहिताप्रसीद
ति . २९ धियः समग्रैः सगुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ततार विद्याः पवनाति पातिभिर्दिशो हरिद्भिर्हरि
तामिवेश्वरः ३० सीदति फलति क्रियाहिद्रव्यं विनयति नो द्रव्यमिति कौटिल्यः २९ धियइति अत्र कामंदकः शुश्रूषाग्र

हणंचैव श्रवणं धारणं तथा ऊहापोहोर्थ विज्ञानं तत्वज्ञानंच धीगुणा इति आन्वीक्षि कीत्रयीवार्तादंडनीतिश्च शाश्वती एता विद्याश्चतस्रस्तु लो-
कसंस्थितिहेतव इतिच उदारधीरुत्कृष्टबुद्धिः सरघुः समग्रैर्धियो गुणैः चत्वारोर्णवा उपमा उपमानं यासां ताश्चतुरर्णवोपमाः तन्द्दितार्थोत्तरपद
कसंस्थिति समाहारेचेत्युत्तर पदसमासः चतस्रो विद्याः हरितां दिशामीश्वरः सूर्यः पवनानिपातिभिर्हरिद्भिर्निजाश्वैः हरित्ककुभिवर्णेच तृण वाजि विशेषयो

रितिविश्वः चतस्त्रो दिशः इव क्रमात् ततार चतुर्वर्णा वोपमत्वं दिशामपि द्रष्टव्यम् ३० त्वचमिति कार्ष्णं रौरव बास्ता निचर्माणि ब्रम्हचारि-
णः वसीरन्नानुपूर्व्येण शाणक्षौमादिका नि वेति मनुस्मरणात् सरघुः मेध्यां शुद्धां रौरवीं रुरुसंबंधिनीं रुरुर्महाकृष्णसार इति यादवः त्वचंच
र्म परिधाय वसित्वा मंत्रवत् समंत्रकं अस्त्रं आग्नेयादिकं पितुरेवोपाध्यायादशिक्षत अभ्यस्तवान् आख्यातोपयोग इत्यपादानात्पंचमी पि-
तुरेवेत्यवधारणमुपपादयति नेति तद्गुरेकोऽद्वितीयः पार्थिवः केवलं पृथिवीश्वर एव नाभूत् किंतु क्षितौ दिलीप एकधनुर्धरोप्यभूत् ३१

त्वचंसमेध्यांपरिधायरौरवीमशिक्षतास्त्रंपितुरेवमंत्रवत् नकेवलंतद्गुरुरेकपार्थिवःक्षितावभूदेकधनुर्धरोपि
सः ३१ महोक्षतांवत्सतरःस्पृशन्निवद्विपेंद्रभावंकलभःश्रयन्निव रघुःक्रमाद्यौवनभिन्नशैशवःपुपोषगांभी
र्यमनोहरंवपुः ३२

महोक्षतामिति रघुःक्रमाद्यौव-
नेनभिन्नशैशवो निरस्तशिशुभावः सन् महानुक्षामहोक्षो महावृषभः अचतुरेत्यादिसूत्रेण निपातनादकारांतत्वम् तस्यभावस्तत्तांस्पृ
शन् गच्छन् वत्सतरो दम्य इव दम्यवत्सतरौ समावित्यमरः द्विपेंद्रभावं महागजत्वं श्रयन् भजन् कलभः करिपोत इव गांभीर्येणाचापलेन म
नोहरं वपुः पुपोष ३२ ७ ७ ७ ७ ७ ७

अथेति गोनीदित्येबलीवर्दे क्रतुभेदर्षिभेदयोः स्त्री तुस्या दृशिभारत्यांभूमौच सुरभावपि पुंस्त्रियोः स्वर्गवज्रांबुरश्मिहग्बाणलोमस्विति केशवः गावो लो-
मादिकेशादी यंते खंड्यंते ऽस्मिन्निति व्युत्पत्त्या गोदानंनाम ब्राम्हणादीनां षोडशादिषु वर्षेषु कर्तव्यं केशांतारव्यं कर्मोच्यते तदुक्तं मनुना केशांतः षोडशेवर्षे ब्रा-
म्हणस्यविधीयते राजन्यबंधोर्द्वाविंशेवैश्यस्य द्व्यधिकेततइति अथगुरुः पिता गुरुर्गीष्पति पित्राद्याविस्त्यमरः अस्यरघोर्गोदानविधेरनंतरम् विवाहदी
क्षांनिरवर्तयत् कृतवानित्यर्थः अथनरेंद्रकन्यास्तंरघुं दक्षस्यसुतारोहिण्यादयस्तमोनुदंचंद्रमिव तमोनुदोऽग्निचंद्रार्काइतिविश्वः सत्पतिमवाप्य

अथास्यगोदानविधेरनंतरं विवाहदीक्षांनिरवर्तयद्गुरुः नरेंद्रकन्यास्तमवाप्यसत्पतिं तमोनुदंदक्षसुताइवाबभुः ३३
युवायुगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकंधरः वपुः प्रकर्षादजयद्गुरुंरघुस्तथापिनीचैर्विनयाददृश्यत ३४

आबभुः रघुरपित्तमोनुत् अत्रमनुः वेदानधीत्य वेदौवा वेदंवापि यथाक्रमम् अविप्लुतब्रम्हचर्यो गृहस्थाश्रममाविशेदिति ३३ संप्रतियौवराज्य-
योग्यतामाह युवेति युवा तरुणः युगोनामधुर्यस्कंधगतः सच्छिद्रप्रांतो यानांगभूतो दारुविशेषः यानाद्यंगेयुगः पुंसि युगंयुग्मे कृतादिष्विति त्यमरः
युगवद्व्यायतौदीर्घौ बाहू यस्यसः अंसावस्यस्त इत्यंसलोबलवान् मांसलश्चेति वृत्तिकारः बलवान्मांसलोंऽसल इत्यमरः वत्सांसाभ्यां कामबले इति
लच्प्रत्ययः कपाटवक्षाः अररोराः कपाटमररंतुल्येइत्यमरः परिणद्धकंधरोविशालग्रीवः अथग्रीवायांशिरोधिः कंधरेत्यपीत्यमरः परिणाहोविशा

लतेत्यमरः रघुः वपुषः प्रकर्षादाधिक्याद्धीवनकृतान् गुरूंपितरमजयत् तथापि विनयान्नम्रत्वेननीचैरल्पकोऽदृश्यत अनौद्धत्यं चाविवक्षितम् ३४
सं प्रति तस्य यौवराज्यमाह ततइति तत आत्मना स्वयं चिरं धृतां नितांतगुर्वीं वोतोगुणवचनादिति ङीप् प्रजानां धुरं पालनप्रयासं लघयिष्यता लघु
करिष्यता तत्करोति तदाचष्ट इति लघुशब्दाण्णिच् ततोलृटः सद्वल्लृटः शतृप्रत्ययः नृपेण दिलीपेनासौरघुः निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यास-
जनितवासनयाच विनीतोनम्र इति हेतोर्युवराज इति शब्दं भजतीति तथोक्तः भजोण्विरिति ण्विप्रत्ययः चक्रेकृतः द्विविधोविनयः स्वाभाविकः कृत्रिम-

**ततः प्रजानां चिरमात्मना धृतां नितांतगुर्वीं लघयिष्यता धुरम् निसर्गसंस्कारविनीतइत्यसौ नृपेण चक्रे युवराज**
**शब्दभाक् ३५ नरेंद्रमूलायतनादनंतरं तदास्पदं श्रीर्युवराज संज्ञितम् अगच्छदंशेन गुणाभिलाषिणी नवाव-**
**तारंकमलादिवोत्पलम् ३६** श्चेति कौटिल्यः तदुभयसंपन्नत्वात्पुत्रं युवराजं चकारेत्यर्थः अत्र कामंदकः विनयोपग्रहान् भूत्यै कुर्वी-
त नृपतिः सुतान् अविनीतकुमारं हि कुलमाशु विशीर्यते विनीतमौरसं पुत्रं यौवराज्येभिषेचयदिति ३५ नरेंद्रेति गुणान् विनयादीन् सौरभ्यादीं-
श्चाभिलषतीति गुणाभिलाषिणी श्रीः राज्यलक्ष्मीः पद्माश्रयाच नरेंद्रो दिलीप एव मूलायतनं प्रधानस्थानं तस्मादपादानादनंतरं सन्निहितं युवराज
इति संज्ञास्य संजाता युवराजसंज्ञितं तारकादित्वादितच् प्रत्ययः आत्मनः पदं स्थानमास्पदं आस्पदं प्रतिष्ठायामिति निपातः सरघुरित्यास्पदंत

दास्पदं कमलाच्छिरोत्पन्नान्नवावतारमच्छिरोत्पन्नमुत्पलमिव अंशेनागच्छत् स्त्रियोहि यूनिरज्यंत इतिभावः ३६ विभावसुरिति सारथिना सहाय-
भूतेन एनद्विशेषणमुत्तरवाक्येष्वप्यनुषंजनीयम् वायुना विभावसुर्वन्हिरिव सूर्यवन्हीविभावसू इत्यमरः घनव्यपायेन सारथिना गभस्तिमान्-
सूर्यइव कटोगंडः गंडः कटोमदोदानमित्यमरः तस्य प्रभेदः स्फुटनं मदोदय इत्यर्थः तेन करीवपार्थिवोदिलीपस्तेनरघुणा अतितरां सुदुःसहः अत्यं
तंस्कुष्टुअसत्योबभूव ३७ नियुज्येति शतक्रतुरिंद्रः उपमाउपमानं यस्य शतक्रतूपमः स दिलीपः शतंवैतल्प्या राजपुत्रादेवा आशापाला इत्यादि भु-

विभावसुःसारथिनेव वायुना घनव्यपायेनगभस्तिमानिव बभूवतेनातितरांसुदुःसहःकटप्रभेदेन करीवपार्थिवः ३७
नियुज्यतंहोमतुरंगरक्षणे धनुर्धरंराजसुतैरनुद्रुतम् अपूर्णमेकेनशतक्रतूपमःशतंक्रतूनामपविघ्नमापसः ३८
ततःपरंतेन मखाय यज्वना तुरंगमुत्सृष्टमनर्गलंपुनः धनुर्भृतामग्रत एवरक्षतांजहारशक्रःकिलगूढविग्रहः ३९ त्याराज

सुतैरनुद्रुतमनुगतं धनुर्धरंतंरघुं होमतुरंगाणांरक्षणे नियुज्य एकेनक्रतुना अपूर्णमेकोनंक्रतूनामश्वमेधानांशतं अपविघ्नमपगतविघ्नंयथातथा-
आप ३८ ततइति ततःपरमेकोनशतक्रतुप्राप्त्यनंतरं यज्वनाविधिनेष्टवता युज्वातुविधिनेष्टवानित्यमरः तेन दिलीपेन पुनरपि मखाय मखं कर्तुं
क्रियार्थोपपदेत्यादिनाचतुर्थी उत्सृष्टंमुक्तं अनर्गलमप्रतिबंधं अव्याहतस्वैरगतमित्यर्थः अपर्यावर्तयंतोश्वमनुचरंतीत्यापस्तंबस्मरणात् तुरंगं

धनुर्भृतां रक्षतांरक्षकाणामग्र त एव शक्रोगूढविग्रहः सन् जहार किलेत्यैतित्ये ३९ विषादेति तत्कुमारस्यसैन्यं सेनासपदि विषादइष्टनाश
कृतोमनोभंगः तदुक्तम् विषादश्चेतसोभंग उपायाभावनाशयोरिति तेनलुप्ताप्रतिपत्तिः कर्तव्यज्ञानंयस्य तत्तथोक्तं विस्मितमश्व नाशस्याकस्मि
कत्वादाश्चर्याविष्टंसत् स्थितं तस्थौ अथश्रुतप्रभावा यदृच्छयास्वेच्छया आगता नंदिनीनामवसिष्ठधेनुश्चददृशे रघोः स्वप्रसादलब्धत्वात्तदनु
जिघृक्षयेतिभावः द्वौचकारावविलंबसूचकौ ४० तदिति सतांपुरस्कृतः पूजितोदिलीपनंदनोरघुःपुण्येन पवित्रेण तस्यानंदिन्यायदंगं तस्यनिष्यं

विषादलुप्तप्रतिपत्तिविस्मितंकुमारसैन्यंसपदिस्थितंचतत्त वसिष्ठधेनुश्चयदृच्छयागताश्रुतप्रभावाददृशेथनंदि
नी ४० तदंगनिष्यंदजलेनलोचने प्रमृज्यपुण्येनपुरस्कृतःसतां अतींद्रियेष्वप्युपपन्नदर्शनो बभूवभावेषुदिली-
पनंदनः ४१ सपूर्वतःपर्वतपक्षशातनंददर्शदेवंनरदेवसंभवः पुनःपुनःसूतनिषिद्धचापलंहरंतमश्वंरथरश्मिसं
यतं ४२

दोद्रवः सएवजलंमूत्रमित्यर्थः तेनलोचने प्रमृज्य शोधयित्वा अतींद्रियेषु इंद्रियाण्यतिक्रांतेषु अत्यादयः क्रांताद्यर्थेद्वितीय
येतिसमासः द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिंगताप्रतिषेधाद्विशेष्यनिघ्नत्वं भावेषु वस्तुषु उपपन्नदर्शनः संपन्नसाक्षात्कारशक्तिर्बभूव ४१
सइति नरदेवसंभवः सरघुःपुनः पुनःसूतेन सारथिना निषिद्धचापलं निवारितौद्धत्यं रथस्यरश्मिभिः प्रग्रहैः किरणप्रग्रहौरश्मीइत्यमरः संयतं

बन्द्वमश्वंहरंतं पर्वत पक्षाणां शातनंछेदकंदेवमिंद्रंपूर्वतः पूर्वस्यांदिशिददर्श ४२ शनैरिति रघुस्तमश्वहर्त्तारं अनिमेषवृत्तिभिर्निमेषव्यापारशून्यैरक्ष्णांशनैः ह
रिभिहरिद्वर्णैः हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोरितिविश्वः वाजिभिरश्वैश्च हरिमिंद्रंविदित्वाज्ञात्वा हरिर्वातार्कचंद्रेंद्रयमोपेंद्रमरीचिष्विति विश्वः ए
नमिंद्रं गगनस्पृशाव्योमव्यापिना धीरेणगंभीरेणस्वरेण ध्वनिनानिवर्त्तयन्निव अवोचत् ४३ मखेति हेदेवेंद्रमनीषिभिस्त्वमेवमखांशभाजांयज्ञभाग
भुजांमध्येप्रथमः यतोनिगद्यसे कथ्यसे ततोपि अजस्रदीक्षायांनित्यदीक्षायां प्रयतस्यमद्गुरोः क्रियाविघाताय क्रतुविघाताय क्रियांवि

शनैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिंविदित्वाहरिभिश्चवाजिभिः अवोचदेनंगगनस्पृशारघुःस्वरेण धीरेण निव
र्तयन्निव ४३ मखांशभाजांप्रथमोमनीषिभिस्त्वमेवदेवेंद्रयतोनिगद्यसे अजस्रदीक्षाप्रयतस्यमद्गुरोःक्रिया
विघातायकथंप्रवर्त्तसे ४४ त्रिलोकनाथेनसतांमखद्विषस्त्वयानियम्याननुदिव्यचक्षुषा सचेत्स्वयंकर्मसुधर्म
चारिणांत्वमंतरायोभवसिच्युतोविधिः ४५

हंतुमित्यर्थः तुमर्थाच्चभाववचनादितिचतुर्थी कथंप्रवर्त्तसे ४४ त्रिलोकेति त्रयाणां
लोकानांनाथस्त्रिलोकनाथः तद्धितार्थेत्यादिनाउत्तरपदसमासः तेनत्रैलोक्यनियामकेन दिव्यचक्षुषा अतींद्रियार्थदर्शिनात्वयामखद्विषः क्रतुविघातकाः निय-
म्याः ननुशिक्ष्याःखलुसत्वं धर्मचारिणां सतांकर्मसुक्रतुषु स्वयमंतरायोविघ्नोभवसिचेत् तर्हिविधिरनुष्ठानंच्युतःक्षतः लोकेसत्कर्मकथंवास्तमित्यादित्यर्थः ४५

तदिति हे मघवन् ततस्मात्कारणात् महाक्रतोरश्वमेधस्य अग्र्यंश्रेष्ठं मंगसाधनं अमुं तुरंगं प्रतिमोक्तुं प्रतिदातुमर्हसि तथाहि शश्वेः पथोर्दर्शयितारः सन्मार्गदर्शकाईश्वरामहांतः मलीनसांमलिनानां पद्धतिं मार्गं नाददते नस्वीकुर्वंते असन्मार्गं नावलंबंत इत्यर्थः मलीमसंतुमलिनं कच्चरं मलदूषितमित्यमर ४६ इतीति इतिरघुणासमीरितं प्रगल्भं वचोनिशम्य आकर्ण्यदिवौकसः स्वर्गौकसः दिवंस्वर्गेंतरिक्षेचेति विश्वः तेषामधिपतिर्देवेंद्रः रघुप्रभावात्सविस्मयः सन् रथंनिवर्त्तयामासउत्तरंप्रतिवक्तुंप्रचक्रमेच ४७ यदिति हे राजन्य कुमार क्षत्रियकुमार मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियोविराडित्यमरः यद्वाक्यमात्थब्रवीषिब्रुवः पंचानामित्यादिना आहादेशः तत्तथासत्यं किंतु यशो धनैरस्मादृशैः परतः शत्रुतः यशोरक्ष्यं ततः किमत आह भवद्गुरुः त्वसिना जगत्प्रकाशंलोकप्रसिद्धं अशेषं सर्वममलयशः इज्यायागेन लंघयितुं तिरस्कर्तुं उद्यतः उद्युक्तः ४८ किंतद्यशइत्याह हरिरिति पुरुषेषूत्तम इतिसप्तमी समासः ननिर्धारणं इतिषष्ठी समासनिषेधात्कर्मधारये

तदंगमग्र्यंमघवन्महाक्रतोरमुंतुरंगंप्रतिमोक्तुमर्हसि पथःश्रुतेर्दर्शयितारईश्वरामलीमसामाददतेनपद्धतिम् ४६
इतिप्रगल्भंरघुणासमीरितंवचोनिशम्याधिपतिर्दिवौकसां निवर्तयामासरथंसविस्मयःप्रचक्रमेचप्रतिवक्तुमुत्तरम् ४७ यदात्थराजन्यकुमारतत्तथायशस्तुरक्ष्यंपरतोयशोधनैः जगत्प्रकाशंतमशेषमिज्ययाभवद्गुरुर्लंघयितुंममोद्यतः ४८ हरिर्यथैकःपुरुषोत्तमःस्मृतोमहेश्वरस्त्र्यंबकएवनापरः

सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरित्युत्तमपुरुष इति स्यात् यथाहरिर्विष्णुरेक एव पुरुषोत्तमः स्मृतः यथाच्यंबकः शिव एव महेश्वरः स्मृतः नापरः अपरः
पुमान्नतथा तथामांमुनयः शतक्रतुं विदुः विदंति विदोलटो वेतिणलादयः नोस्माकं हरिहरयोर्मम चेत्यर्थः एषत्रितयोपि शब्दो द्वितीयगामी नहि द्वितीयामक
रणे गम्यादीनामुपसंख्यानात्समासः ४९ अतइति यतोहमेव शतक्रतुरतः त्वदीयस्यपितुः अयं शतनमोश्वः कपिलानुसारिणा कपिलमुनितुल्येनमया
अपहारितः अपहृतः अपहारित इतिस्वार्थेणिच् तवात्राश्वे प्रयत्नेनालं प्रयत्नोमाकारीरित्यर्थः निषेधस्य निषेधं प्रतिकरणत्वात् तृतीया सगरस्य राज्ञः सं

तथाविदुर्मांमुनयःशतक्रतुं द्वितीयगामी नहिशब्दएषनः ४९ अतोयमश्वःकपिलानुसारिणापितुस्त्वदीय
स्यमयापहारितः अलंप्रयत्नेन तवात्रमानिधाःपदंपदव्याःसगरस्यसंततेः ५० ततःप्रहस्यापभयःपुरं
दरंपुनर्बभाषेतुरगस्यरक्षिता गृहाणशस्त्रंयदिसर्गएषतेनखल्वनिर्जित्यरघुंकृतीभवान् ५१

ततेः संतानस्यपदव्याः पदंमानिधाः मानिधेहि निपूर्वाद्धातेर्लु
ङ् नमाङ्योगइति अडागमप्रतिषेधः महदास्कंदनं तेविनाशमूलं भवेदितिभावः ५० ततइति ततस्तुरगस्य रक्षितारघुः प्रहस्य प्रहासंकृत्वा अपभयोनिर्भी
कःसन् पुनःपुरंदरं बभाषे किमितिहेदेवेंद्र एषः अश्वमोचनरूपस्ते तव सर्गो निश्चयो यदि सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिष्वित्यमरः तर्हिश

त्वं गृहाण भवान् रघुं मामनिर्जित्य कृतीकृत कृत्यो खलु इष्टादिभ्यश्चेतीनि प्रत्ययः रघुग्रहणादात्मनो दुर्जयत्वं सूचयति ५१ सइति सरघुः उन्मुखः सन् मघवंतमिंद्रमेवमुक्त्वा शरासनं चापं सशरं करिष्यमाणः आलीढेन आलीढाख्येन स्थानभेदेन विशेषशोभिना वपुः प्रकर्षेण देहोन्नत्येन विडंबितेश्वरो ऽनुकृतपिनाकीसन् अतिष्ठत् आलीढलक्षणमाह यादवः स्थानानि धन्विनां पंच तत्र वैशाखमस्त्रियाम् त्रिवितस्त्यंतरो पादौ मंडलं तोरणाकृति अन्वर्थं स्यात्समपदमालीढंतु ततोग्रतः दक्षिणं वाममाकुंच्य प्रत्यालीढं विपर्यय इति ५२ रघोरिति रघोः अवष्टंभा

सएवमुक्त्वामघवंतमुन्मुखः करिष्यमाणः सशरं शरासनम् अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडंबितेश्वरः ५२ रघोरवष्टंभमयेन पत्रिणा हृदि क्षतोगोत्रभिदप्यमर्षणः नवांबुदानीकमुहूर्तलांछने धनुष्यमोघं समधत्तसायकम् ५३ दिलीपसूनोः सबृहद्भुजांतरं प्रविश्यभीमासुररशोणितोचितः पपावनास्वादितपूर्वमाशुगः कुतूहलेनेवमनुष्यशोणितम् ५४ मयेन स्तंभरूपेण अवष्टंभः

स्तुवर्णेच स्तंभ प्रारंभयोरिति विश्वः पत्रिणा बाणेन हृदये क्षतो विद्धः अतएवामर्षणः असहनः क्रुद्ध इत्यर्थः गोत्रभिदपींद्रोपि संभावनीये चौरेपि गोत्रः क्षोणीधरेमतइतिविश्वः नवांबुदानामनीकस्य मुहूर्तं क्षणमात्रं लांछने चिन्हभूते धनुषि दिव्ये धनुषीत्यर्थः अमोघमवंध्यं सायकं बाणं समधत्त संहितवान् ५३ दिलीपेनि

उक्तमर्थमाशीर्वादपूर्वकमुपसंहरति विधिसमयनियोगादिति विधिर्दैवं विधिर्दैवे विधानेन्चेत्यमरः समयः कालस्तयोर्नियोगा नियमाद्धेतोः
तयोर्दुरतिक्रमत्वादिति भावः अगाधेदुस्तरे आपत्पयोधिरिवेत्युपमितसमासः दिनकृतमिवेतिवक्ष्यमाणानुसारात् तस्मिन्नापत्पयोधौ
मग्नं सूर्योऽपिसायंसागरेमज्जति परेद्युरुन्मज्जतीत्यागमः दीप्तिः प्रतापः आतपश्च तस्याः संहारेण जिह्ममप्रसन्नं शिथिलवसुं शिथिलध

विधिसमयनियोगाद्दीप्तिसंहारजिह्मं शिथिलवसुमगाधेमग्नमापत्पयोधौ
रिपुतिमिरमुदस्योदीयमानं दिनादौ दिनकृतमिवलक्ष्मीस्त्वांसमभ्येतुभूयः ४६

नं अन्यत्रशिथिलरश्मिं वसुर्ईदेग्नौरश्मौच वसुतोये धनेमणाविति वैजयंती शिथिलबलमितिपाठेतूभयत्रापि शिथिलशक्तिकमित्यर्थः
अथरिपुस्तिमिरमिवतद्रिपुतिमिरं उदस्यनिरस्य उदीयमानंमुद्यंतं इङ् गताविति धातोर्दैवादिकात्कर्तरि शानच् त्वां दिनादौ दिनकृत-

भिवलक्ष्मीर्भूयः समभ्येतु भजतु आशिषिलिङ्लोटाविति लोट् चमत्कारितया मंगलाचरणरूपतया च सर्गांत श्लोकेषु लक्ष्मीशब्दप्रयोगः
यथाह भगवान्भाष्यकारः मंगलादीनि मंगलमध्यानि मंगलांतानि शास्त्राणि प्रथंते वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवंति अध्येतारश्च
प्रवक्तारो भवंतीति पूर्णोपमेयं मालिनीवृत्तं सर्गांतत्वाद्वृत्तभेदः यथाह दंडी सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसंधिभिः सर्वत्र भिन्नसर्गां
तैरुपेतं लोकरंजनमिति ४६ अथ कविः काव्यवर्ण्यनामाख्यानपूर्वकं सर्गपरिसमाप्तिं कथयति इतीति इतिशब्दः परिसमाप्तौ भारवि

## इति भारविकृतौ महाकाव्ये किरातार्जुनीये प्रथमः सर्गः

कृताविति कविनामकथनं महाकाव्य इति महच्छब्देन लक्षणसंपत्तिः सूचिता किरातार्जुनीय इति काव्यवर्ण्ययोः कथनं प्रथमः सर्गः समाप्त
इति शेषः एवमुत्तरत्रापि द्रष्टव्यं किरातार्जुनावधिकृत्य कृतो ग्रंथः किरातार्जुनीयं शिशुक्रंदयमसभद्वंद्वेंद्रजननादिभ्यश्छ इति द्वंद्वाच्छप्रत्ययः राघवपांड
वीयमितिवत् तथाप्यर्जुन एवात्र नायकः किरातस्तु तदुत्कर्षाय प्रतिभटतया वर्णितः यथाह दंडी वंशवीर्यप्रतापादीन् वर्णयित्वा रिपोः

पि तज्जयान्नायकोत्कर्षकथनंचांधिनोतिनइति अथायंसंग्रहः नेता मध्यमपांडवो भगवता नारायणेन प्रभुस्तस्योत्कर्षकृते तु वर्ण्यंति
तथा दिव्यः किरातः पुनः शृंगारादिरसोंगमत्र विजयी वीरः प्रधानं रसः शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलं इति
श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घंटापथसमाख्यायां प्रथमः सर्गः १
द्विसप्तसप्तेंदु १७७२ मिते शाके पुण्याख्यपत्तने यत्नतः पाठशालायामंकितोयं शिलाक्षरैः १ १

